


# व्याकरणग्रन्थरत्नावली

EDITED BY

**Pandit R V KRISHNAMACHARIAR,**

*Abhinava Bhatta Bana,*

**Supervisor of Sanskrit Schools,**

*Southern and Western Circles,*

MADRAS



1915 K. V. Press Tanjore

॥ श्रीः ॥

व्याकरणग्रन्थरत्नावल्याः

नवमं रत्नम्

# ॥ परिभाषेन्दुशेखरः ॥

श्रीनागेशभट्टेन

विरचित

पायगुण्डे. वैद्यनाथभट्टेन

कृतया गदाख्यया व्याख्यया

सहित

'अभिनवभट्टबाणशब्दतर्कालंकारविद्याभूषणेन'

मात्स्यचक्रवर्तिना

रायपेट्टै. कृष्णमाचार्येण

संपाद्य संशोध्य

मद्रपुरस्थ

श्रीबालमनोरमामुद्राक्षरशालायां

मुद्रित

मूल्यम्] १९३५ [सार्धं रूप्यकद्वयम्

## ॥ परिभाषासूचिका ॥

॥ श्री· ॥

# ॥ परिभाषेन्दुशेखरः ॥



नत्वा साम्बशिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥

प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसि-

---

॥ श्रीः ॥

## परिभाषेन्दुशेखरव्याख्या

# गदा

वैद्यनाथः पायुगुण्डो नत्वा नागेश्वरं गुरुम् ।
विवृतिं परिभाषेन्दुशेखरे तनुते गदाम् ॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानतिरूपं मङ्गलमाचरन्, शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुपङ्गतो मङ्गलाय च निबध्नाति— नत्वेति । निर्गुणमूर्तेर्नेयसमवादाह— साम्बेति । रूपकमिदम् । बालानां भाष्यादितः परिभाषार्थनिर्णयासमर्थानाम् । परिभाषा एवेन्दुः अर्थप्रकाशकत्वात् स शेखरो यस्येति ग्रन्थपक्षे; तत्र तासामेव व्याख्येयत्वेन ग्रन्थ·शास्मस्तकधृतत्वमारोप्यते । यद्वा स शेखरो भूषणं यस्य । यद्वा तस्य शेखर आश्रय· । यद्वा तासां प्रकाशकोऽलंकारस्तम् । शिवपक्षे तु परिभाषा इवेन्दु· रित्यादि स्पष्टमेव ॥

ननु कास्ता परिभाषा अत आह— प्राचीनेति । इन्द्रादीत्यर्थः । वाचनि-

द्धानि भाष्यवार्तिकयोर्निबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ।

ननु लण्‌अइउण्सूत्रयोर्णकारस्यैवोपादानेन अणिण्ग्रहणेषु संदेहादनिर्णय ; अत आह—

## व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् ॥ १ ॥

विशेषस्य अन्यतरार्थरूपस्य व्याख्यानात् शिष्टकृतात् प्रतिपत्ति निश्चय , हि यत संदेहात् शास्त्रम् अलक्षणम् अननुष्ठापक लक्षणम्, तथा न,

---

क्तानि सूत्ररूपेण पठितानि । अत्र अस्मिन् । एकमेऽपि । ज्ञापकेति । अस्य प्रागेणेत्यादि । तथा च वाचनिकानामपि तत्साहचरितान्ना सम्बन्ध । न्यायसिद्धात् ज्ञापकसिद्धस्याभ्यर्हितत्वात् ज्ञापकशब्दस्य द्वन्द्वे पूर्वनिपात । तत्र एतच्छास्त्रीयलिङ्गं ज्ञापकम्, एतच्छास्त्रलोकतन्त्रान्तरप्रसिद्धयुक्तिर्न्याय । सूत्रपाठस्थपरिभाषाणामव्याख्यानाय प्राचीनोक्तानां वाक्यानिदप्रामाण्याय चाह— भाष्येति । अनेन स्वार्थतावच्छेदकमुक्तम् । तथा च रूढमिदं परिभाषापदम् । यद्वा योगरूढमस्तु, 'परितो भाष्यते या सा' इति व्युत्पत्त्या, अत एव 'परितो व्यापृता भाषा परिभाषा प्रचक्षते' इत्यभियुक्तोक्ति, 'परिभाषा पुनरेकदेशस्था' इत्यादिभाष्यं च सङ्गच्छते । एतेन रूढयोगरूढमिदमिति शान्तोक्तिरपास्ता, सञ्ज्ञादिष्वतिप्रसङ्गादिति भाव । पुन प्रतिज्ञा तु स्पष्टार्था, यथा राजा प्रजाते ॥

तत्र भाष्ये सर्वत्र पूर्वम् 'व्याख्यानत—' इत्यस्या उक्तत्वेन सर्वशास्त्रोपकारकत्वेन च तां तावदुक्तु शङ्कते— नन्विति । विशेषेति । 'कर्तृकर्मणो—' इति कर्मषष्ठ्यन्तेन समास । 'उभयप्राप्तौ—' इत्यस्याप्रवृत्त्या न प्रतिषेधाप्रवृत्त्या 'कर्मणि—' इति निषेधाप्रवृत्त , शेषषष्ठ्या वा समास , तद् ध्वनयन्नाह— विशेषस्येति । बहुवचनं अन्यतमस्यादिना परामर्श । व्याख्यानादिति । 'पदच्छेद पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्' इत्युक्तपदच्छेदादिरूपाद्व्याख्यानादित्यर्थ । ननु तदर्थापरिज्ञानात् आह— शिष्टेति । भाष्यकारादीनाम् । प्रस्तुतस्याह— शास्त्रमिति । प्रकरणलब्धमिदम् । ननु तत्र व्याख्यानस्य तत्त्वार्थ निर्णये दुष्करोऽत आह— अननुष्ठापकमिति । तद्व्याख्यानभाव इत्यर्थ शुभमिति भाव ।

शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः । असंदिग्धानुच्चारणमिदमर्थेऽत्र शास्त्रे संदिग्धोच्चारणरूपाचार्यव्यवहारेण संदेहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत् । तेन 'अणुदित्सवर्णस्य—' इत्येतत्परिहाय पूर्वेण अण्ग्रहणम्, परेण इण्ग्रहणमिति लण्सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

तत्र संज्ञापरिभाषाविषयं पक्षद्वयमित्याह—

## यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

## कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥

उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । अधिकरणसाधनश्चायम् । यत्र देशे उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृही-

---

औचित्यादिति । अन्यथा शास्त्रानर्थक्यापत्तेरिति भावः । नन्वणादिषु भाष्योक्तज्ञापकैरेव संदेहपरिहारे किमर्थं परिभाषेत्यत आह—असंदीति । सिद्धत्वर्थे निष्फलके संदिग्धपदे अर्शआद्यच्; संदिग्धार्थप्रतिपादकणकारानुबन्धोच्चारणरूपाचार्यव्यवहारेणेत्यर्थः । तथा च तैर्महद्भिः प्रयत्नैः संदेहपरिहारे प्रतिपत्तिगौरवम्, ज्ञापकशून्यस्थले अनिर्वाहश्चेति इयमावश्यकी; अन्यथा लाघवाय वर्णान्तरमेवानुबध्येतेति भावः । ननु ज्ञापितेऽपि प्रवर्तकतया निवर्तकतया वा नास्य चारितार्थ्यमत आह— बोध्यत इति । तथा चोपदेशानंतरमेव सिद्ध एवायमर्थस्तादृशव्यवहारेण बोध्यत इति नान्यत्रेयात्र ज्ञापकता भगवतोऽभिमतेति भावः । उक्तदोषोद्धाररूपमेतत्फलमाह— तेनेति । व्याख्यानेनैवेत्यर्थः । भाष्य इति । अनेन एव सति ज्ञापकानुसरणक्लेशो वृथेति सूचितम् । एतेन तेषूक्तार्थसिद्धिर्न व्याख्यानमात्रात्, किं तु सज्ञापकादिति तथा प्राचोक्तमयुक्तमिति सन्देहभ्रान्तायुक्तमपास्तम्, भाष्यविरोधापत्तेरिति दिक् ॥

अथ संदिग्धादिभिरनुक्तमपि परिभाषाद्वय संज्ञापरिभाषाणां सर्वशास्त्रोपकारकत्वादादौ तत्प्रकरणोल्लेखप्रसक्तद्विपयकमादौ वक्तु पूर्वसंगतिमाह— तत्रेति । साध इत्यर्थः, 'अलक्षणम्' इत्यनेन तस्य पूर्वमुपस्थितत्वादिति भावः । संज्ञेति । इतरेतरद्वन्द्वः, अत्र समाहारद्वन्द्वः । तत्र आशया अर्थमाह— उद्देशमिति । ल्यबन्तरत्र वर्तत इति शेषः । उद्देशोपदेशयोरन्यत्र कश्चिद्भेदादुद्देशपदस्य भावप्रभृत्यर्थमाह— उपदेशेति; अधीति

तत्परिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः । देशश्च उच्चारणकाल एवात्र शास्त्रे व्यवह्रियते । तत्तद्वाक्यार्थबोधे जाते भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेणमंतुष्यद्यथाश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्ष इति ईदूत्सूत्रे कैयटः । केचित्तु परिभाषाविषये 'तस्मिन्—' इत्यादिवाक्यार्थबोधे सप्तमीनिर्देशादि केति पर्यालोचनायां सकलतद्विध्युपस्थितौ सकलतत्संस्काराय गुणभेदं परिकल्प्य एकवाक्यतयैव नियमः । कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः । एतदेवाभिप्रेत्य 'अधिकारो नाम त्रिप्रकार—कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वल-

---

च । तथा चोपदेश एवोद्देशोऽर्थः । अयम् उद्देशशब्द । व्युत्पत्तिं सूचयितुमत्र पक्षे निर्धारमाह— यत्रेति । एतेन विधिदेशे व्यावृत्तिः । संज्ञास्थले आह— गृहीतेति । परिभाषास्थले आह— गृहीतपरीति । उभयत्र कर्मणस्य । सर्वत्र अष्टाध्याय्याम् । ननु कोऽसावत्र देशः, यत्र वाक्यार्थबोधः; प्रसिद्धदेशस्तत्र न सम्भवतीत्यत आह— देशश्चेति । चस्त्वर्थे । व्यवह्रियत इति । तथा च न मुख्यं तत्त्वम्, किं तु आरोपितमिति भावः । नन्वेवं तदानीं विधिवाक्यार्थाज्ञानेन किमस्य फलमित्याकाङ्क्षाशान्त्यभावेन दुष्ट एवायं पक्षोऽत आह— तत्तदिति । संज्ञापरिभाषावाक्यार्थेत्यर्थः । अनेन शास्त्रप्रदेशेन परिभाषार्थग्रहणेन च । मात्रपदेन विशेषज्ञानव्यावृत्तिः । नन्वत्र पक्षे अग्नी इत्यादौ प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षे अनुनासिकप्रतिबन्धेन फलवत्त्या प्रवृत्तसंज्ञाया ततः प्लुते त्रिमात्रत्वेन पर्यवन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावादविधित्वेन स्थानित्वाभावाद्ग्रहणत्वेनानुनासिकः स्यादिति चेत्; न, संज्ञाया कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजसत्त्वेन पुनस्तस्याः सुलभत्वात् । स्पष्टं चेदं तत्रैव भाष्ये । दुष्टत्वाद्याशङ्का नेति सूचयितुम्, कैयट इति सूचितामरुचिमुक्तपक्षे ध्वनयितुं च सिद्धान्तभाष्यमतमाह— केचिदित्यादिना । केचिदिति । भाष्यतत्त्वविद इत्यर्थः । परीति । संज्ञायां विशेषस्य वक्ष्यमाणत्वादिति भावः । बोधे सतीति शेषः । आदिना सर्वासमर्थग्रहणम् । सकलतद्विधीति । सप्तमीनिर्देशादियदितसर्वविधीन्यर्थः । एवमग्रेऽपि । संस्कारः विशिष्टवाक्यार्थनिश्चयः । गुणभेदं परिभाषाभेदम् । एतेन भिन्नवाक्यताव्यावृत्तिः । नियमः इतरव्यावृत्तिः । ननु यथोद्देशेऽप्येवं पदैकवाक्यतायां को भेदः कार्यकालपक्षादत आह— कार्येति । अपि सपादसप्ताध्यायीसमुच्चायकः । तथा च तत्र पक्षे सर्वैकवाक्यता, अत्र तु त्रिपादीभिन्नैवेति भेदः; वाक्यार्थबोधस्तु स्पष्टं उभयथाप्यस्त्येवेति भावः । अत्र प्रमाणमाह— एतदेवेति ।

यति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति—' इति 'षष्ठी स्थाने—' इति सूत्रे भाष्य उक्तम्। अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते। कश्चित् परिभाषारूप इति कैयटः। दीपो यथा स्वप्रभाद्वारा सर्वगृहप्रकाशकः, एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः। तत्रैतावान्विशेषः— यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्। तदुक्तम् 'क्ङिति च' इति सूत्रे कैयटेन— 'यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जते' इति। कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यता— इति। अत्र 'एकदेशस्थः' इत्यनेन तत्र तत्र तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति। यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः, किं स्वाभिजनदेशीयत्वव्यवहार एव, तद्वत्। निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति

---

पक्षद्वयेऽपि पदैकवाक्यतयैव नियम इत्येतदेवेत्यर्थः। नामेति निश्चये। ननु परिभाषाप्रसङ्गे अधिकार इत्युक्तिरयुक्ता, तत्राह— अधीति। तदुभयमप्याह— दीप इति। 'एतदेवाभिप्रेत्य' इत्युक्तमभिप्रायमाह— एतच्चेति। पक्षद्वयेति। यथोद्देशकार्यकालेत्यर्थः। प्रदेशाः विधि.। इतः उक्तभाष्यात्। तत्र द्वयोः पक्षयोरेकवाक्यतायाम्। आत्मभेदं परिभाषाभेदम्। तैः विधिसूत्रैः। प्रधानानि विधिसूत्राणि; अनेन तत्तद्विषयकनिषेधापत्त्वे बीजं दर्शितम्। गुणभेदं निषेधभेदम्। तत्तदित्यनेन यौगपद्य निरस्तम्। एवं च यथोद्देशे एकदेशस्थत्वं स्पष्टमेव। कार्यकाले तु स्वविषयसर्वशास्त्रैकवाक्यत्वात्तत्त्वम्, उक्तपठितदेशस्थेनैव तत्र तत्र स्वबुद्धिजननादिति भावः। तदाह— अत्रेति। उक्तपठितदेशस्थत्वमेव सर्वथा बोधभाष्य इत्यर्थः; कार्यकाल इति भावः। एवं स्पष्टार्थं। पठितदेशस्थत्वमेव सर्वथा बोधयितुम् 'एकदेशस्थ' इत्युक्तमिति तात्पर्यम्। ननु कार्यकालपक्षेण समाभ्युक्तिस्तत्र भाष्ये अयुक्ता; न हि निषेधस्य परिभाषात्वव्यवहारोऽस्त आह— निषेधेति। अपिर्मुख्यसमुच्चयकः; तत्त्वेन व्यवहारे अन्वयः। निषेध्येति। अनुवृत्तगुणवृद्धिश्रुत्या तद्विशेषरूपनिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रोपस्थितौ तत्र तत्तद्विषयकनिषेधवाक्यानां व्यतिरेके विनिगमनाविरहादुपस्थेन एकवाक्यतयैवान्वय इत्यर्थः। इतीति। तथान्वितत्वरूपं

परिभाषायामादेशस्यापरिभाषात्वेन व्यवहारः 'क्ङिति च' इत्यत्र भाष्ये । तत्रै-कवाक्यता तयोः पर्युदासन्यायेन । प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधसमये-णैकवाक्यताव्यवहारः । संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः, किं तु प्रदेशवाक्यार्थेन सह । अत एव 'अणोऽप्रगृह्यस्य' इत्येतद्वाक्यनाशकम् 'अदसो मात्' इत्यनन्तरमपि न तुल्यासिद्धम्, असिद्धत्वस्य वाक्यार्थतया कार्य-ज्ञानोत्तरमेव प्रवृत्तिः कार्यज्ञानं च प्रदेशदेश एवेति तद्देशासम्भ्यासिद्धत्वात्पूर्व-ग्रहणेनाग्रहणात् । एवं वाक्यार्थबोधोत्तरमेव विरोधभाननियमान्नेति तत्सत्त्वापरत्वेन विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अत एव कार्यकालपक्षे अपवादैः पूर्वं प्रवृत्त

संज्ञेति 'अदसो मात्' इति सूत्रे भाष्य उक्तम् । आकडाराधिकारस्थभपद-संज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बाध्यबाधकभावः । पदादि-संज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः । अत एव 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षाश्रयणेन समाहितमित्याहुः । यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥ २ ॥

कार्यकालमित्यस्य च कार्येण काल्यते स्वसंनिधिं प्राप्यत इत्यर्थः; कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत् । अत एव 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य 'यद्यपीदं तत्रासिद्धम्, तत्त्विह सिद्धम्' इत्युक्त्वा, तावताप्यसिद्धिरित्यभिप्रायके 'कथम्' इति प्रश्ने 'कार्यकालं संज्ञा-

---

तत्तात्पर्यमित्यनुपदमेव स्फुटीभविष्यति मूले । नन्वेवं भपदसंज्ञादाविष्टो बाध्यबाधकभावो न स्यादत आह— **आकडारेति** । **भपदसंज्ञादीति** । संज्ञाद्वयमुपदेशेन यत्र प्राप्त तत्रेत्यर्थः; तेन न पूर्वापरविरोधः, न वा भाष्यस्वरसादिविरोध इति भावः । **तत्रत्येति** । स्वदेशस्थेत्यर्थः । नन्वेवं तद्दृष्ट्या त्रिपाद्या असिद्धत्वात्तत्र प्रवृत्तिर्न स्यादत आह— **पदादीति** । तत्र स्वगृहे । एवकारेण विधिप्रदेशे शक्तिग्रहनिरासः । आपि सपादसप्ताध्यायीसमुदायेन.; 'ष्यङः संप्रसारणम्—' इति सूत्रस्थं भसंज्ञायाः कार्य-कालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति भावः । तत्र मानमाह— **अत एवेति** । तत्र यथोद्देशा-ङ्गीकारे तया निर्वाहादेवेत्यर्थः । एतेन संज्ञान्यावृत्तिः । आशङ्क्य यथोद्देशे तदसिद्धत्वात्; अन्यथा शङ्कासमाध्योः संज्ञायामपि तुल्यत्वेन, विशिष्य तत्रैव तदुक्त्यसांगत्यं स्पष्टमेवेति भावः । यथोद्देशस्य दुर्बलत्वात्तत्सत्त्वे मानमाह— **यथोद्देशेति** ॥

एवमाद्यपरिभाषार्थमुक्त्वा द्वितीयार्थमाह— **कार्येति** । चस्त्वर्थे । नन्वचेतनत्वा-दुभयोः कथं परिभाषायाः सांनिध्यप्राप्तिः । किं च सर्वत्र सर्वासां तदापत्तिः । किं च असिद्धे तस्मिन्कथं तदुपस्थितिरत आह— **कार्येणेति** । तथा चारोपितयाकाङ्क्षया नोक्तदूषणत्रयमिति भावः । तत्र तृतीयदोषोद्धारं स्पष्टयितुमुक्तस्याक्षेपस्य परिभाषार्थत्वे मानमाह— **अत एवेति** । अस्यास्तदाक्षेपार्थत्वादेवेत्यर्थः । तत्र त्रिपाद्याम् । **परि-भाषाणामिति** । मनाग्ध्यन्ते गतिमन्तरेणेति भावः । इदं त्रिपादीस्थम् । तत्र तस्मिन्नपि-

परिभाषम्। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्' इत्युक्तम्। न च कार्यकालपक्षे 'ङमो ह्रस्वात्—' इत्यादौ 'तस्मादित्युत्तरस्य'-'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति 'तस्मिन्—' इति सूत्रस्यभाष्यासंगतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासंगत्यापत्तेः; स्पष्टं चेदम् 'इको गुण—' इत्यत्र कैयट इति वाच्यम्, विप्रतिषेधसूत्रे अष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात्। न हि कार्यकालपक्ष इत्येतावता तद्व्यपैति, पक्षद्वयेऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात्। न हि तत्पक्षेऽप्यनेनैतस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति, नाप्य-

स्मदादिबुद्धिजननेन स्वदेशत्यागो भवति । अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम् । अत एव 'तस्मिन्—' इति सूत्रे कैयटः— 'सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वम्' इति । 'इको गुण—' इतिसूत्रस्थकैयटस्तु चिन्त्य एव । अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात् । किं च 'क्ङिति च' इतिसूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे संनिधानेन तेषां परत्वं व्याहन्येत । एवं च वृक्षेभ्य इत्यत्र 'सुपि च' इत्यतः परत्वात् 'बहुवचने झल्येत्' इत्येत्वमित्याद्युच्छिद्येतेत्यलम् ॥ ३ ॥

---

तत्र च वैपरीत्यं बोध्यम् । युक्तेति । तद्विषयेत्यादि । इदं च परिभाषास्थत्वं । सन्नाधत्वं सूत्रभाष्यबलात्तथाङ्गीकृतमिति भावः । अत एव स्वदेशत्यागादेव । तथ भाष्यमुक्तमाह । कैयटस्याप्यैकमत्यमित्याह— अत एवेति । अत एवार्थः । नन्वेवमुक्तभाष्यविरोधात्स्वविरोधाच्च तत्कैयटस्य का गतिरत आह— इको गुणेतीति । विपक्षे बाधकमप्याह— अन्यथेति । पूर्वपक्षार्थकैयटोक्तयुक्त्याकार इत्यपि । प्रयोगार्थत्वेन प्रयोगसाधनफलकत्वेन । देशस्थत्वेन तत्र मिलनात् । न स्यादिति । तथा च परत्वस्योच्छेद एव स्यादिति भावः । नन्वत एव तादृशदेशो न गृह्यतेऽत आह— किं चेति । कैयटेति । स च प्रागुक्तः । संनिधानेन पाठेन । तेषामिति । तेषामपीत्यर्थः । इष्टापत्तौ बाधकमाह— एवं चेति । तत्परत्वव्याघाते चेत्यर्थः । न चैवं कार्यकालपक्षमादाय त्रिपाद्यां परिभाषाणां प्रवृत्तिः यथोद्देशे तु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेनाप्रवृत्तिरेव स्यादिति भाष्याद्युक्तमतः प्रागुक्तं विरुध्यतेति वाच्यम्, परिभाषाणां सिद्धत्वेन अत्र पक्षे असिद्धेनापि कार्येण स्वार्थे एकवाक्यताकाङ्क्षया तदाक्षेपसम्भवस्योक्तत्वात् । वस्तुतः सर्वत्र पाठकृतपरत्वमत्र तन्नियामकम् । 'परत्व प्रगृह्यसंज्ञा' इत्यत्र संज्ञापदेन तत्कार्यं प्रकृतिभाव उच्यते । आद्याया-भिप्रायेण प्रश्नः— कथमिति । एकदेशिन उत्तरम्— कार्यकालमित्यादि । एवं च न तद्विरोध इत्येकरूपता संज्ञापरिभाषयोः सिद्धा । एवं चानागते स्वस्वरूपे वाक्यार्थबोधः, पूर्वपक्षस्थासहकारकत्वमपि तस्य तुल्यम् । एतेन कार्यकालेऽपि पाठकृतपरत्वमयादीनामेव; अन्यथा 'ङमो ह्रस्वात्—' इत्यादौ त्रिपाद्यां कार्यकालपक्ष एव परिभाषयोः प्रवृत्त्या परत्वात्तत्र 'तस्मात्—' इत्येवेति सिद्धान्तासंगतिः, उभयोरेकदेशस्थत्वेन परत्वाभावादित्यपास्तम् । अत एव एतादृशस्य दुष्टत्वेन तत्राहचिसूचनाय 'केचित्' इत्युक्तम्; अन्यथा एतदन्तस्य सर्वस्य सिद्धान्तत्वेन 'परे तु' इति वक्तुमुचितम् । अत एवैतद्ग्रन्थस्य

इत्संज्ञका अनुबन्धाः, तेष्ववयवानवयवत्वसंदेहे आह—

## अनेकान्ता अनुबन्धाः ॥ ४ ॥

अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव; अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात् । शिदित्यादौ समीपे अवयवत्वारोपेण समासो बोध्यः । 'वुन्छण्कठच्' इत्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णेयम् । 'हलन्त्यम्' इत्यत्र अन्त्यशब्दः परसमीपबोधकः ॥ ४ ॥

वस्तुतस्तु—

## एकान्ताः ॥ ५ ॥

---

'अदसो मात्' इत्यत्रत्योद्योतविरोधो नेति दिक् । तदेतद्ध्वनयन्नाह— अलमिति ॥

अथैतत्संज्ञायाः संज्ञाप्रसङ्गेन स्मृतायास्तद्विशेषभूताया. शास्त्रमूलत्वात्तच्छास्त्रादौ ुक्तत्ववत् तद्विषयक परिभाषाद्वयमादौ वक्तु जीर्णातुरत्वात्तद्ग्रन्थे न्यूनता ध्वनयितु च पूर्वसंगतिमाह— इत्संज्ञेति । संज्ञायाः पूर्वमुपस्थितत्वात्तद्विशेषे तादृशे विचार इति भावः । इत्संज्ञाप्रयुक्तस्वलोपान्यकार्यजनकत्वविशिष्टमिदमनुबन्धसामान्यलक्षणम् । अवयवेति । अस्य प्रकृत्येत्यादिः । अनेकान्ता इति । इत्यस्येति शेषः । तत्त्व व्यतिरेकमुखेनोपपादयति— यो हीति । शाखादिरित्यर्थः । छेदने तथानुपलम्भादाह— कदाचिदिति । अयं तु अनुबन्धत्वावच्छिन्नस्तु । न तथा न अवयवः । तदर्थेति । तद्विहितार्थेत्यर्थं ; तथा चानुपलम्भप्रयत्नं विना तत्रान्यत्र चोपलभ्यमानोऽवयवः, न विना तत्रैवोपलभ्यमान एव च, सोऽनवयव इति फलितम्; अन्यथा शाखाया अपि छेदनोत्तरमन्यत्रोपलम्भात्तत्रोपलम्भाभावेनानवयवत्व स्यादिति भाव । नन्वनवयवत्वे वृत्तिर्न स्यात् सम्बन्धाभावात्; सामीप्ये न वृत्तिर्नेति स्पष्टयन्नाह— शिदिति । समासः बहुव्रीहि. । नन्वेवमपि पूर्वत्वपरत्वविशेषोऽप्य इत्कार्यप्रसङ्गः कथंचिदत आह— वुनिति पूर्वस्यैवेत्यस्य पूर्वसम्बन्धिन एवेत्यर्थः । नन्वेवमपीत्सर्वनामाभावे मूले कुठार एवात आह— हलन्त्यमिति । एवमेकदेशिमतमुक्त्वा सिद्धान्तमाह— वस्तुत इति । एकान्ता

इत्येव न्याय्यम्, शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनवयवो हि काकादिरेकजातीयसंबन्धेन गृहवृक्षादिषूपलभ्यते; नैवमयम् । एवं हि बहुव्रीहिरपि न्याय्य एवोपपन्नः, अन्यशब्दे लक्षणा च न । किं च अनवयवत्वे णशक्प्रत्ययादौ ण्वादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावात् । द्व्यनुबन्धकारम्भवैयर्थ्यापत्तिश्च । इदं च 'तस्य लोपः' इत्यत्र भाष्ये स्पष्टम् । तत्र युक्तम्— 'एकान्ता अनुबन्धा इत्येव न्याय्यम्' इति दिक् ॥ ६ ॥

नन्वेकान्तत्वे अनेकान्तत्वादेव औशादीनां सर्वादेशत्वसिद्ध्या अनेकाल्सूत्रे

---

अवयवा । ननु तदभावसाधकहेतोरवक्तव्यत्वात् तत्कथमत आह— शास्त्र इति । तत्र विधेयबोधके । एतेन विधेयेऽनुपलम्भोऽपि हेतुरेव सूचितः, अवयविनि दर्शनस्यैवापेक्षितत्वेन तस्यात्र सत्त्वात् । अन्वयमुखेन व्यतिरेकमाह— अन्यत्रेति । इदमपि व्यतिरेकमुखेनैवोपपादयति— **अनवयवेति** । **एकजातीयसंबन्धेन** सगोत्रादिना । **नैवमयमिति** । अनुबन्धो न तादृशसंबन्धेन सर्वत्रोपलभ्यत इत्यर्थः । एवं तद्धेतुनिरासेन साधिते अवयवत्वे साधकान्तरमप्याह— **एवं हीति** । यतोऽवयवत्वम् इत्यर्थः । अतोऽभयत्रान्वय । **न्याय्यत** औचित्येन, आरोपं विनेति यावत् ।[1] ननु तयोः पूर्वोक्तगतिर्द्वयामपि निर्णयोऽस्त आह— **किं चेति** । णकादिशब्दोऽप्यन्यथा ग्रहणमुखयोः व्याख्यानुमतमाह— **द्व्यनच इति** । ननु पूर्वमुक्त एव व्याख्यानतो निर्णय इति न तस्य वैयर्थ्यमत आह— **इदं चेति** । पूर्वोक्तं सर्वं चेत्यर्थः; तदेवाह— **तत्र युक्तमिति** । एकान्ता अनेकान्ता वेत्यनुबन्धविचारे युक्तं तत्र भाष्ये, तस्यायं भावः— एकान्तत्वे एकोऽप्यवयवो द्वयोर्न संभवतीति व्याख्यानेन निर्णयेऽपि नानेकान्तत्वे तथा, आनन्तर्यस्योभयापेक्षत्वेन एकत्र विशेषाभावात्संदेहाभावाद्व्याख्यानाप्रवृत्तेः विरुद्धानेककोटिविषयकज्ञानस्यैव संदेहत्वात् । तथा च वैयर्थ्यं सम्यगेव । किं चोक्तरीत्या व्याख्यानाप्रवृत्तौ युष्मदस्मदादिविहितकादिविषये पित्त्वादिप्रयुक्तदूषणापत्तिः । लक्षणादोषाभावप्रयुक्तं लाघवं च । पूर्वोक्तहेतुना तस्यैव सिद्धयेति, तद् ध्वनयन्नाह— **दिगिति** ॥

एतत्पक्षे भाष्योक्तं दोषत्रयं तदुक्तरीत्यैव तत्समेधोद्धर्तुं पूर्वमङ्गतिमाह— **नन्वेकान्तत्व इत्यादि** । अनुबन्धकृतमनेकाल्त्वं नाश्रयणीयमिति परिभाषार्थः । एकमप्यपि । अन्यः

---

१ ननु तयोर्निर्णयमनापेक्ष्य हरपूर्वोक्त मतिरेवमुत्तेऽत आह— किं चेति ।

शिद्ग्रहणं व्यर्थमत आह—

## नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

शिद्ग्रहणमेव एतज्ज्ञापकम्। तेन 'अर्वणस्तृ—' इत्यादेर्न सर्वादेशत्वम्। डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेन आनुपूर्व्यात्सिद्धम् ॥ ६ ॥

नन्वेवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्त्वे कृते 'अदाप्' इति घुसंज्ञाप्रतिषेधो न स्यात्, दैप पकारसत्त्वेऽनेजन्तत्वादात्त्वाप्राप्त्या पलोपोत्तरं पकाराभावेन अस्य दाप्रूपत्वाभावादत आह—

## नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

---

ज्ञापकमाह— **शिदिति**। उक्तरीत्येति भावः। 'घ्वसोरेद्धौ—' इत्यत्र निर्वाहस्तु भाष्यादौ स्पष्ट इति तात्पर्यम्। चारितार्थ्ये त्वस्मिन्नस्यानुपेक्ष्य ज्ञापितपरिभाषाफलमाह— **तेनेति**। ज्ञापितवचनेनेत्यर्थः। एवमग्रे सर्वत्र बोध्यम्। ननु णल' प्रत्ययाधिकारपाठादौपदेशिकप्रत्ययत्वेनानुबन्धत्वेनानया प्राप्तदोषस्य प्रक्षेपेण निवारणेऽपि डादिरनया सर्वादेशो न प्राप्नोति, गत्यन्तरसम्भवेन पूर्वप्रक्षेपो नात आह— **डादीति**। आदिना 'जस शी' 'सुपाम्—' इतिसूत्रोक्त शादेशादिसंग्रहः, औपदेशिकप्रत्ययत्वस्यात्र सर्वत्राभावात्। तथा च सर्वादेशता आदौ, ततः आतिदेशिकं प्रत्ययत्वम्, ततः इत्संज्ञेति पूर्वं तदभाव एव। अनुबन्धत्व विचारणं न तु उपलक्षणमिति भावः, तदाह— **आनुपूर्व्यादिति**। उक्तक्रमादित्यर्थः। एतेनात्र पलुक्षित कुर्वन्तीरदेवादि परास्तं, उक्तहेतोः। इदं च प्राचीनरीत्या। अत एवात्र विरोधकस्तु प्रयुक्तः। वस्तुतो णल्युक्तप्रकार एव डादौ। 'जस शी' इत्यादौ शित्वादेव सर्वादेश इति बोध्यमित्यन्यत्र निरूपितं गुरुभिः। स्पष्टं चेदं ज्ञापकम् 'तस्य लोपः' इत्यत्रैव भाष्ये ॥

**एवमपि** उक्तदोषस्यात्र मते उद्धारोऽपि। **पलोपोत्तरमात्त्व इति**। अन्यथा अनेजन्तत्वान्न स्यादिति भावः। **न स्यादिति**। तथा च 'अच उपसर्गात्' इति स्यादिति भावः। ननु पकारसत्त्व एव निषेधोऽस्त आह— **दैप इति**। **आत्त्वाप्राप्त्येति**। अस्य दाप्त्वाभावेऽन्वयः। नन्वेवं तल्लोपोत्तरं सोऽस्त आह— **पलोपोत्तरमिति**।

'उदीचां माङः—' इति निर्देशोऽस्या ज्ञापकः । 'आदेच उपदेशे—' इति सूत्रेणोपदिश्यमानैजन्तस्यात्त्वं क्रियते; ङकारसत्त्वे एजन्तत्वाभावादात्त्वाप्राप्तेस्तस्यासंगतिः । न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्त्वम्, तत्र धातोरित्यस्य निवृत्तेरित्यन्यत्र विस्तरः । स्पष्टं चेदम् 'दाधा घ्वदाप्' इति सूत्रे भाष्ये ॥ ७ ॥

नन्वेवमपि 'वासरूप—' इति सूत्रेण क्वविषयेऽणोऽप्यापत्तिरित्यत आह—

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

---

**अस्य** उक्तप्रयोगस्यस्य । **इति निर्देश इति** । इत्यत्रत्यो मेङः सानुबन्धस्यात्त्वभूतस्य माङ इति निर्देश इत्यर्थ । तस्य तत्त्वमुपपादयति— **आदेच इति** । उपदेश इति कर्मणि घञ्, षष्ठ्यर्थे सप्तमी, विशेष्यत्वं च तस्य; तदाह— **उपदीति** । **तस्यासंगतिरिति** । माङ इति निर्देशस्यासंगतिरित्यर्थः । 'तस्य तदर्थज्ञापकतासंगतिः' क्वचित्पाठः । तत्र निर्देशस्य परिभाषार्थज्ञापकत्वसंगतिरित्यर्थः । **अस्यां** मेङ इत्यस्याम् । **तस्य** मे इत्यस्य, अनुबन्धलोपे जात एव धातुत्वमित्यर्थस्य 'न धातुलोपे—' इति सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति भावः । **तत्र** 'आदेचः—' इत्यत्र । **निवृत्तेरिति** । गवादिशब्दानां दीक्षितेत्याद्येकदेशाना चानुपदेशत्वात्वम् । इरेप्रभृतीनामुपदेशेऽप्यशित्परत्वाभावान्न तत् । प्रसज्यप्रतिषेधेऽपि प्रत्यासत्त्या शिदन्ययपरत्वयोग्यानामेव ग्रहणान्न दोषः । उच्चारणसामर्थ्यादपि तत्रादोषः; 'यावता विना—' इति सिद्धान्तादिदमपि तज्ज्ञाप्यम् । एतेन तदादेशाना टेरनेत्वज्ञापनेन चरितार्थं तदित्यपास्तम् । अत एव 'अधापि निवृत्तम्' इति 'आदेचः—' इत्यत्र 'तदेतद्धातुग्रहण तिष्ठतु तावत्सान्यासिकम्' इति 'लिटि धातोः—' इत्यत्र च भाष्ये उक्तम् । अन्तरङ्गत्वात् व्यतीहारनियसम्बद्धस्य मेङ एव सूत्रे ग्रहणम्; न माङः, तस्य पदान्तरसंनिधानेन प्रतीयमानबहिरङ्गव्यतीहारवृत्तित्वादिति कैयटः । अन्ये तु माङोऽनभिधानात् क्त्वोऽनुत्पत्तिरिति न तस्य तत्र ग्रहणमित्याहु. । तदाह— **इत्यन्यत्रेति** । उदीचांदावित्यर्थ । अत्र सम्मतिमाह— **स्पष्टं चेदमिति** । उक्तज्ञापकमित्यर्थः । दाधाघित्युपलक्षणम् 'तस्य लोपः' इति सूत्रस्यापि ॥

'ददातिदधात्योर्विभाषा' इति णत्वबाधकशास्त्रस्य विकल्पविधायकमस्या ज्ञापकम् । तेन गोद इत्यादौ नाणीनि वासरूपसूत्रे भाष्ये स्पष्टम् ॥ ८ ॥

ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्, प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति न्यायात् । अस्ति च प्रकृते बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम् । न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह—

## उभयगतिरिह भवति ॥ ९ ॥

इह शास्त्रे । 'संख्याया अतिशदन्तायाः' इति निषेधोऽस्या ज्ञापकः ; न हि कृत्रिमा संख्या त्यन्ता शदन्ता वास्ति । तेन 'कर्तरि कर्मव्यतीहारे' 'कृञ्प्रमेधेभ्यः करणे' 'विप्रतिषिद्धं चानधिकरण—' इत्यादौ लौकिकक्रियाद्यर्थावगतिः । तत्र

---

**प्रथमपीति** । प्रागपि । **इति चेति** । इत्यस्य 'इणाङ्गपरं—' इति प्राप्तणत्वस्य बाधकशास्त्रस्य 'ददाति—' इति सूत्रविहितस्य विकल्पविधायकं विभाषाग्रहणमित्यर्थः । तत्कृतासाध्यांगीकारे तु तेनैव सूत्रेण रूपद्वयसिद्धौ तदानर्थक्यं स्पष्टमेव । शङ्कितोऽवतारयति— **तेनेति** । भावकर्मण्युपलक्षणम् 'तस्य लोपः' इति सूत्रस्यापि ॥

अपेक्षाप्रसक्तप्रसङ्गाद्विरोधे विचार इति पूर्वसंगतिं ध्वनयन्नाह— **ननु संख्येति** । **प्रकरणेति** । इदं च हर्यादिग्रन्थे स्पष्टम् । ननु सैन्धवमानयेत्यादौ भोजनादिप्रकृते किं तत्प्रकरणम् ? येन तद्वदत्रापि शक्तिसंकोचो भवेत् । न च पूर्वोपक्रान्तत्वं तत्त्वम्, अव्यवहितस्य तस्याभावादत आह— **अस्ति चेति** । **कृतेतीति** । शास्त्र इति भावः । एवं पदच्छेदं स्पष्टयन्नाह— **नत्विति** । एकशब्दस्यानेकार्थत्वेन संख्यार्थग्रहणायाह— **कद्व्यादीति** । परिभाषापाठनिरासायाह— **शास्त्र इति** । **अतिशदन्ताया इति** । इत्यत्र अत्रापि निषेध इत्यर्थः । ज्ञापकमुपपादयति— **न हीति** । ननु अनर्थकत्वेऽपि तैः सामर्थ्यात्स्तीति कृत्रिमसंख्यामादाय स निषेधः सफलोऽस्त्वत आह— **शदन्ता चेति** । **लौकिकेति** । तत्त्वं चात्र वेदाभिप्रायदित्वम्; अत एव तत्र सामर्थ्यात्तन्त्रान्तरप्रसिद्धद्वयग्रहणेऽपि न क्षतिः । यद्यपि अकृत्रिमस्यैव ग्रहणमितिमात्रज्ञापनेऽपि अस्य साफल्यम्, तथाप्याश्रितादौ दोषापत्ते सत्वाकरणवैयर्थ्यापत्तेश्च उभयग्रहणज्ञापकत्वेन व्याख्यायते; अन्य च भन्याग्रहणे न दोष

## कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥

'स्थण्डिलाच्छयितरि—' इति निर्देशश्चास्यां ज्ञापकः । ऊर्णुनविषती-त्यादिसिद्धये— कार्यमनुभवन्निति । अत्र हि 'द्विर्वचनेऽचि' इति नुशब्दस्य द्वित्वम्; अन्यथा 'सन्यङोः' इत्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेन इटो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात् । वस्तुतः समवायिकारणनिमित्तकारणयो-र्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या । अत एव हिः प्रयुक्तः; स हि तत्त्वेनाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्वम् । 'द्विर्वचनेऽचि' इत्यत्र भाष्ये ध्वनितैषा ॥ १० ॥

---

संग्रहः । शयितेति तृजन्तपाठस्तु सुगम एव । **निषेधः स्यादिति** । किवडतीति सत्सप्तमीति भावः । न चैवम् 'निष्ठा शीङ्—' इति व्यर्थम्, तेन तावन्मात्रवारणापेक्षया परिभाषाज्ञापनस्यैवौचित्यादिति वाच्यम् । यत्तु— अस्या ज्ञापकं दीधीवेव्योर्गुणप्रतिषेधः कुटादौ कुङः पाठो वेति सीरदेवादयः; तन्न, 'दीधीवेवीटाम्' इत्यस्य प्रत्याख्यानात् प्रत्याख्यान-पक्षे इष्टफलाभावेन भाष्यरीत्या तदसम्भवात् आदीध्यकं इत्यादावनिग्लक्षणायोर्विकल्पतीति-वृद्धिनिषेधेन साफल्येन सूत्ररीत्यापि तस्यासम्भवात् पाठस्याशोकवनिकान्यायेन चरितार्थ-त्वाच्च; अत आह— **स्थण्डिलादिति** । न च निर्देशः सौत्रः, तथा सति अन्यत्र प्रयोगो न स्यादिति भावः । येन 'निष्ठा शीङ्—' इति निषेधस्य दीधीवेव्योः प्रकारान्तरेण प्रत्या-ख्यानपरभाष्यस्य च समुच्चयः; अन्यथा तयोर्ङित्त्वात् 'क्ङिति च' इत्यनेनैव निषेधे सिद्धे प्रकारान्तरानुसरणं व्यर्थमिति बोध्यम् । तथा च अध्येता शयितः अरिरिषतीत्यादिसिद्धिः । **एवमूर्णुनविषतीत्यादावत्राह— ऊर्णुनेति** । हि यतः । **द्वित्वमिति** । न तु पूर्वत्रैवेति भावः । अन्यथा तद्विशेषणाभावे । **निमित्तत्वाभावात्** तदप्राप्तेः । तत्प्रवृत्तिः 'द्विर्वचनेऽचि' इत्यस्य प्रवृत्तिः । एतेन परिभाषाद्वयमिति सीरदेवाद्युक्तम्, सुप्युपास्य इत्यादावन्यथा प्राप्तदोषस्य ज्ञापकाद्वारणमिति भ्रान्तोक्तम्, एकपरिभाषापक्षेऽपि प्रायिक-त्वलक्ष्यानुसारकाचिदाश्रीयते क्वचिन्नेत्याद्योक्तम्, उक्तज्ञापकासिद्ध परिभाषान्तरमित्यन्योक्त-मपास्तम्; उक्तयुक्तेर्भाष्येऽस्यानुक्तेश्च व्याकरणेऽपि कार्येणोपश्लिष्टस्यैव निमित्तत्वव्यव-हाराच्च । न चारिरिषतीत्यादावपि तथा, उपश्लेषस्य सम्बन्धरूपस्य भेदनिबन्धनत्वात्, तद्दूषयन् सिद्धान्तमाह— **वस्तुत इति** । अस्य तस्येत्यनेनान्वयः । **तत्त्वेति** । न्याय-शास्त्रादौ इत्यर्थः । तस्य समवायिकारणस्य । तत्त्वेन निमित्तकारणत्वेन । अत एव

नतु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह—

## यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

यमुद्दिश्यागमो विहित, स तद्गुणीभूत शास्त्रेण तदवयवत्वेन बोधित, अतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थ । तत्र तद्गुणीभूता इत्यंशो बीजकथनम् । लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहण दृश्यते । यमुद्दिश्य विहित इत्युक्ते प्रणिदारयतीत्यादौ

---

अज्ञापकसाध्यत्वादेव । हेतौ सकललोकतन्त्रप्रसिद्धमदृष्टस्य । ध्वनितैवेति । तत्र हि जेघ्रीयते देध्मीयते इत्येतद्वाक्याजग्रहणस्य स्थानिदेशानापत्तोक्ता तत्र यथा ध्वनिता, तथा स्पष्टमुद्धयते ॥

अथ सम्प्रसङ्गादेव सञ्ज्ञाकमेके सन्निविशेषाद्द्वयेके विधा विचार इति ध्वनयन्नाह— नतु प्रणीति । दापेर्न स्यादिति । तत्र स्व रूपम्—' इति तद्ग्रहणेन समुदायस्य अदारूपत्वादेकदेशस्य चानर्थकत्वात्, तया च णत्व न स्यादिति भाव । इद च मुख्यकार्यकालपक्षे । द्वितीयस्तु दुर्बल एवेत्युक्तम् । सञ्ज्ञाहकवाक्येऽत्र बहुवचनसत्त्वेऽपि लक्ष्य सत्काकवाक्ये तदनुपयोगादाह— यमिति । एतत्परिभाषाप्रवृत्तिविषयसूत्र कार्यित्वेन निर्दिष्टमित्यर्थ । अस्य तत्पदार्थद्वयेनान्वय । तस्य तत्रोद्देश्यता च यथाकथञ्चित्, न तु तत्सूत्रे तत्तदवच्छेदकरूपेणैवेत्याग्रह इति भाव । आगम इति । अस्य य इत्यादि । तद्गुणीभूत इति । अस्य यत इत्यादि । अस्यैव व्याख्या— शास्त्रेणेति । 'आद्यन्तौ टकितौ' इत्यादिनेत्यर्थ । ननु ग्रहणम् उच्चारण ज्ञान वा न हि तेन तस्य ग्रहण सम्भवतीत्यत आह— तद्ग्राहकेति । ननु तद्ग्राहकेण श्रावणे तद्ग्रहणेऽपि प्रकृतदार्भिमत आह— तद्बोधकेति । नन्वेवमपि तेन उच्चारणासम्भवोऽस्त आह— बोध्यत इति । समुदाय इति शेष । इदमेव ध्वनयितुमस्या लोकन्यायसिद्धत्व प्रतिपादयितु तदादर तया विशेषण सफलयति— तत्रेति । तेन तद्बोधन इत्यर्थ । परिभाषाशरीर[illegible] कथित् । तद्गुणीभूत इति पाठे तत्रेत्यस्य व्याख्यान इत्यर्थ । अनेन परिभाष[illegible] तदुक्तप्रायम्, तदेवाह— लोकेऽपीति । अपि शास्त्रसमुच्चायक । तद्विशिष्ट[illegible] सिद्धि । एतेन तदर्हितत्वानुवृत्ति । ननु यदागमा—' इत्यत्र यदागम[illegible]

परिभाषया आगमानामागमिधर्मवैशिष्ट्यमपि बोध्यत, इत्याशयकऋदुमुद्सूत्रस्य प्यासंगतेः। किं च गुणादे रपरत्वे रेफविशिष्टे गुणत्वादि एष्टव्यम्; अन्य च्छकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात्। तच्च वर्णग्रहणे एतदप्र न संगच्छते। अत एव 'रदाभ्याम्—' इति सूत्रे, भाष्यम्— 'गुणो भव वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते' इति। अत एव 'नेट्' 'णेरनिटि' इत्यादि चरितार्थम्। 'अनागमकानां सागमका आदेशाः' इत्य त्वयमर्थः—आर्धधातुकस्येडागम, इत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानुप अर्थापत्तिमूलकवाक्यान्तरकल्पनेन इड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति। एवं च आदेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः। स्थानिवत्त्वं

इत्यपि भाष्यविशेषणम्। 'असंगते.' इति मिश्र पाठः। ननु हस्वात्परपदादावयवत्वम् स्या जादेः पदस्येति व्याख्यानस्यैव सिद्धान्तत्वेन अस्येतरेद्युक्तमतावलम्बनकत्वेनानित्य त्वाभाव इत्यतोऽन्त आह— किं च गुणादेरिति। अन्यथेति। विशिष्टे गु इत्यर्थ.; सर्वस्मान्तगतस्याभावस्य तुल्यत्वादिति भावः। तच्चेति। विशिष्टे तद्रूपेण ग्रह यत इत्यादिः। विशिष्टे तस्त्रे सम्मतिमप्याह— अत एवेति। विशिष्टस्य तत्त्वांशे भाष्यमिति। अस्य संगच्छत इति शेष., तदेवाह— गुण इति। यत्तु भ्रान्त्या 'नेटि' इत्यादिज्ञापकमात्रमाश्रेयमिति, तन्न, लोकन्यायसिद्धस्योक्तत्वात्; तद् ... अत एवेति। तथा परिभाषाऽनित्याऽविरित्यर्थ., अन्यथा अपटीत्काारयितव्यमित्यादि व्यवहितत्वादिव वृद्धिणिलोपयोरप्राप्त्या किं निषेधाभ्यामिति भावः। तथा च आद्ये द्वितीये अवाहयमनिटीति निषेधः चरितार्थमित्यर्थो बोध्यः। आदिना अधराणीत निर्देशपरिग्रहः। नन्वनागमकानां सागमका आदेशा इति सिद्धान्तात् स्थानिवद्भावे वृद्धयादिनिषेधार्थतया 'नेटि' इत्यादेः साफल्यमिति कथमेतज्ज्ञापकत्वं तयो? ति समुदायस्य तत्त्वमित्यनया व्यर्थेयम्, तेनैव गतार्थत्वादत आह— अनागमेति। मर्थ इति। अस्य कर्तव्येत्यत्रान्वयः। यथाश्रुतार्थयोगे बीजप्रतिपादनपूर्वकमत्र माह— आर्धधातुकस्यादिकल्पनेनेत्यन्तेन। तथा च सा इति तृतीया। अ पत्त्येति। अर्थः तृतीया; तदभिन्ना या अर्थापत्तिस्तन्मूलकेत्यर्थः। तुपपत्त्यर्थ पाठस्तु सुगमः। यद्वा यस्याभावो तस्य हेतुत्वेनान्वय इति यथाश्रुतं साधु। अर्था कल्पकप्रमाणान्यायः। वाक्यान्तरेणेति। 'इड्रहितार्धधातुकस्य सेडार्धधातुकमित्यादि इत्यादिः। एवं चेति। बुद्धिविपरिणामस्वीकारे चेत्यर्थः। यत्रापि आगम

आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति 'अच: परस्मिन्—' इत्यादेर्नासंगतिः । एतेन 'यदागमा—' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् । एतत्सर्वम् 'दाधा घ्वदाप्' इति सूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

नन्वेवमुदस्थादित्यादौ 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिरत आह—

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

---

इत्यादीनामसंगतिरत श्रौतावयवावयविभावस्याप्यत्र त्यागात् 'यदागमा—' इत्यस्यासंगतिरेवात आह— आनुमानिकेति । 'यथा' इत्यादि । नासंगतिरिति । 'तथात्रापि श्रौतावयवावयविभावस्य न त्याग इति यदागमा इत्येतस्यप्रवृत्तिस्यात्तदैवेति प्रणिदाप्यतीत्यादौ न दोष' इति शेषः; अन्यथा आनुमानिकेत्यादिग्रन्थस्य प्रकृतासुपयुक्तत्वं स्पष्टमेव । प्रासङ्गिकत्वकल्पनापेक्षया इत्थमत्रोचितमिति बोध्यम् । यत्तु— अत्र पक्षे आगमत्वं नास्त्येवेति, तन्न, अनागमकानामित्यादिग्रन्थस्यासंगतेः किं च निरवयवशब्दबुद्धिनिमज्जनसाधनकरणवुद्धयुन्मज्जनेन आगमत्वव्यवहारस्यापि निर्बाधत्वात् । किं च निरवयवपक्षेणाय 'एङः' इत्यादाविव अत्रापि बुद्धिविपरिणामभावस्वीकारेण समुदाये गौणादेशत्वव्यवहारेण अवयवे तदागमो न युक्त, भिन्ननिष्ठत्वनावयवाधीरिति दिक्, तद् ध्वनयन्नाह— एतेनेति । उक्तरीत्या अनर्थकावयवपक्षत्वेनेत्यर्थः । इदं सर्वं समूलयति— एतत्सर्वमिति । परिभाषा तद्वयाख्यानम् अनागमकानामित्यादि सर्वं चेत्यर्थः । तत्र हि प्रणिदाप्यतीत्यादौ तद्भावाय कृतम् 'समानशब्दप्रतिषेध' इति वार्तिकम् अर्थवद्ग्रहणपरिभाषया खण्डयित्वा, प्रणिदाप्यतीत्यत्र तदेकदेशाशङ्कमाशङ्क्य, 'न वा अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते' इत्यादि उक्त्वा, निर्दिश्यमानागमदासनमयुक्तमित्याशङ्क्य, निर्दिश्यमानादेशासन यथा बुद्धिविपरिणामेन तथाप्यादेशाद्यायेन 'आदेशास्तर्हीमे भविष्यन्ति— अनागमकानां सागमकाः । तत्कथम्? सर्वे सर्वपद—' इत्याद्युक्तम् । आदेशा इत्यादेः, इमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशा तादृशा भविष्यन्तीत्यर्थः इति बोध्यम् ॥

प्रथमम् यदागमा इत्यत्रीत्यर्थः । अनेन पूर्वसंगतिरुक्ता । नेत्र तापत्रयोपतप्तान्तरस्य-

'षष्ठी स्थानेयोगा' इति सूत्रमावर्तते। तत्र द्वितीयस्यायमर्थः—षष्ठ्यन्तं निर्दिश्यमानम् उच्चार्यमाणम् उच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव [illegible] स्थानेन स्थाननिरूपितेनसंबन्धेन युज्यते, न प्रतीयमानमिति; तेनेदं सिद्धम्। न च 'अस्य च्वौ' इत्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्, जातिपक्षे दोषाभावात्। किं च 'न भूसुधियोः' इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः। इयङुवङोर्ङित्त्वं त्विवर्णोवर्णान्तधातु-

---

न्यायसिद्धा, किं तु सूत्रार्थभूतेत्याह— **षष्ठीति**। यद्यपि 'षष्ठी स्थाने—' इति सूत्र प्रसिद्धार्थक नापेक्षितम्, तद्भिन्नेवान्तरहत्यादिना अत्र शास्त्रे तादृगस्थले सर्वत्र स्थानसंबन्धलाभात्। तथा चानर्थक्यात्तदीयमयमर्थ इति भाष्ये उक्तम्, सीरदेवादिभिरपि तथैवोक्तम्; तथापि अबुधबोधनाय सूत्रमतावलम्बेनाह— **आवर्तत इति**। तत्र एतस्य प्रसिद्धार्थकत्वादाह— **तत्रेति**। तयोर्मध्य इत्यर्थः। अयं वक्ष्यमाणः। तमेवाह— **षष्ठ्यन्तमित्यादिना इतीत्यन्तेन**। 'प्रत्ययग्रहणे—' इति परिभाषया तदन्तग्रहणादाह— **षष्ठ्यन्तमिति**। निर्दिश्यमानपदाध्याहारादाह— **निर्दिश्येति**। तदर्थमाह— **उच्चार्येति**। ननु सूत्रोच्चार्यमाणस्य न तत्संबन्धः, किं तु प्रयोगस्थस्यात आह— **प्रयेति**। नन्वेवं 'सर्वं वाक्यम्—' इति न्यायात्सामर्थ्यात्परिभाषायाः फलवत्त्वात्वादाह— **निर्दिश्येति**। उच्चार्यसुपद उदस्थादित्यादिसिद्धावपि अतिस्थ इत्यादौ दोषोऽस्त आह— **निर्दिश्येति**। उच्चार्यमाणसजातीयावयवरूपमेव वेत्यर्थः। इदमप्यध्याहारलभ्यम्। सुपद उदस्थादित्यादौ तु व्यपदेशिवद्भावेन सिद्धिरिति भावः। स्थानसार्थसंबन्धस्यान्यत्र प्रतिपादितत्वादाह— **स्थाननिरूपितेति**। निरूप्यनिरूपकभावेनेत्यर्थः। योगेति कर्मणि यगित्याह— **युज्यत इति**। एतद्व्यावर्त्यमाह— **नेति**। **प्रतीयमानं** प्रतीयमानसजातीयं प्रतीयमानसजातीयावयवरूप [illegible]। 'इति तेनेदम्' इति पाठः। **तेनेदमिति**। उक्तार्थकतत्सूत्रेणोक्तवचनं मूलमित्यर्थः। यद्वा उभयत्र अयं इत्येव पाठः। अस्मिन्पक्षे उक्तवचनस्य इत्यर्थः। तदेवाह— **षष्ठ्यन्तमित्यादिसिद्धमित्यन्तेन**। **इत्ययं इति**। द्वितीयसूत्रस्येति भावः। अन्यत्सर्वं प्राग्वत्। एतत्साधितपरिभाषायां व्यक्तिपक्षे शङ्कते— **न चेति**। इत्यादौ इत्यादिविषये मालीभवतीत्यादौ। **दोषाभावादिति**। जातेः स्वतो निर्दिश्यमानत्वाभावेऽपि नान्तरीयकतया तत्तत्पर्योच्चारित व्यक्तिद्वारक तदस्त्येव। जातिश्च सर्वत्रापि निर्दिष्टेति भावः। ननु यमपि व्यक्तिपक्षे दोषस्तदवस्थ एवात आह— **किं चेति**। 'च' इति शेषः। **ग्रहणकशास्त्रेति**। ग्राहकाणुदित्सूत्रेत्यर्थः। **कार्यबोधनात्** कार्यप्रबोधनात्।

आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति 'अच परस्मिन्—' इत्यादेर्नासंगतिः । एतेन 'यदागमा—' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् । एतत्सर्वम् 'दाधा घ्वदाप्' इति सूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

नन्वेवमुदस्थादित्यादौ 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिरत आह—

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

---

इत्यादीनामसंगतिरत श्रौतावयवावयविभावस्याप्यत्र त्यागात् 'यदागमा —' इत्यस्यासंगतिरेवात आह— आनुमानिकेति । 'यथा' इत्यादि । नासंगतिरिति । 'तथापि श्रौतावयवावयविभावस्य न त्याग इति यदागमा इत्येतत्प्रवृत्तिरप्याहतैवेति प्रणिदापयतीत्यादौ न दोष' इति शेषः, अन्यथा आनुमानिकेत्यादिग्रन्थस्य प्रकृतानुपयुक्तत्वं स्पष्टमेव । प्रासङ्गिकत्वकल्पनापेक्षया इत्थमत्रोचितमिति बोध्यम् । यत्तु— अत्र पक्षे आगमत्वं नास्त्येवेति, तन्न, अनागमकानामित्यादिव्यवहारासंगतेः किं च निरवयववस्तुधिनिमग्नसावयववस्तुबुद्ध्युन्मज्जनेन आगमत्वव्यवहारस्यापि निर्बाधत्वात् । किं च निरवयवाक्षणाय 'एङ' इत्यादाविव अत्रापि बुद्धिविपरिणाममात्रस्वीकारेण समुदाये गौणादेशत्वव्यवहारेण अवयवे तदागमो न युक्तः, भिन्नविभक्तिनिर्देशात्वाद्विरोधादिति दिक्, तद्ध्वनयन्नाह— एतेनेति । उक्तरीत्या अनयाभिन्नावयवत्वेनेत्यर्थः । इदं सर्वं समूलयति— एतत्सर्वमिति । परिभाषा तद्व्याख्यानम् अनागमकानामित्यादि सर्वं चेत्यर्थः । तत्र हि प्रणिदापयतीत्यादौ इमामाद्य कृतम् 'समासशब्दप्रतिषेध' इति वार्तिकम् अर्थवद्ग्रहणपरिभाषया समाधित्सा, णिदापयतीत्यत्र तदर्थवत्समासाद्ग्रहणम्, 'न वा अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते' इत्यादि उक्त्वा, निरर्थकागमशासनमयुक्तमित्याद्युक्त्वा, निर्दिश्यमानस्यादेशाः यथा बुद्धिविपरिणमन तथात्रापीत्याशयेन 'आदेशास्तर्हीमे भविष्यन्ति— अनागमकानां सागमकाः । तथा सर्वे सर्वपद—' इत्याद्युक्तम् । आदेशा इत्यादेः इयं आगमत्वेन व्यवहारपिभाषा इति तथा निर्दिश्यमाना अपि आदेशा सागमका भविष्यन्तीत्यर्थं इति बोध्यम् ॥

१. एवम् यदागमा इत्यादीनाम् । अनेन पूर्वसंगतिरुक्ता । नेयं स्थानिवत्सूत्रेणैव तत्त्वान्तरगेय-

श्नुश्नुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय । रिङ्डोर्ङित्त्वं तु स्पष्टार्थमेव । एतेन इद ङित्त्व वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तम्' हयवरट्सूत्रस्थेन 'अयोगवाहानामुपदेशो अलोन्त्यविधि प्रयोजनम्—वृक्षस्तत्र । नैतदस्ति प्रयोजनम् । निर्दिश्यमानस्येत्येव सिद्धम्' इति भाष्येण

अन्यथा 'एरनेकाच —' 'ओः सुपि' इत्यादौ तेषां ग्रहणेऽप्यनिर्दिश्यमानत्वाद्भ्रूसुधियोर्यण प्रसंगेनेव नेति निषेधवैयर्थ्यं स्पष्टमेव । धातोरनुवृत्त्या निर्दिष्टत्वेऽपि ह्रस्वेकारान्तादेव तस्य लाभम्, न तु दीर्घेकारान्तादे । नियमुरित्यादौ 'एरनेकाच —' इत्यस्य, पटुमन्तमाचष्टे णिच् मतुपो लोप । तत क्विप् पटु ) पट्वावित्यादौ 'ओः सुपि' इत्यस्य च चारितार्थ्यमिति भाव । नन्वेवमपि इयङुवङोर्ङित्त्व व्यर्थम्, य्वोरित्युक्त्या अनया तयोरेव भवनादत आह— इयङिति । इह य्वोरिति 'सम्भवति—' इति न्यायेन धातोरेव समानाधिकरण विशेषणम्, नान्यथा, असम्भवाद् व्यभिचाराच्च, तदाह— इयणोर्यणन्तेति । धातुश्नुभ्रुवामिति पाठ । सर्वभूतत्वेन अभ्यर्हितत्वादेव तत्ता पूर्वनिपात । अत एवात्रे धात्वादीनामित्युक्ति । सूत्रे तु सौत्रत्वात्तदविवक्षया अल्पाच्तरत्वेन तथा प्रयोग इति बोध्यम् । इत्यर्थेन 'अचिश्नुधात्वित्यस्य' इति शेष । अपितु वर्णसमुदायरूप । निर्दिष्टत्वात्[1] 'तत्र पत साक्षात्' इति शेष, एव च तस्याविशेषेऽपि प्राधान्यात् श्नुभ्रुवोरनयुक्त्यसम्भवाच्च तेषामेव स्यादिति नानया वारणमिति, ङित्त्वमावश्यकमिति भाव । नन्वेवमपि रिङ्डोर्ङित्त्व व्यर्थम्, तद्विधौ वर्णत्वसमुदायस्यानिर्दिष्टत्वादनयैव निर्वाहात् । न च 'अङ्गस्य' इति अधिकारप्राप्तमिति तदपि निर्दिष्टमेवेति वाच्यम्, तावतापि अतिप्रसक्त्या तस्य स्वातन्त्र्येण अस्थानित्वेन तदन्तविधि विना तदादेशाप्राप्त्या अवश्यवाच्यतदन्तविधौ तत्र स्थानित्वनिवारकत्वेनात्यास्तस्य विद्यमानस्यापि निर्दिष्टत्वस्याप्रयोजकत्वात् । अत एव प्राक् धात्वादीत्यादिपदावलि, 'एरनेकाच —' इत्यादावसत्त्वास्तत्त्व च । एव चानुवृत्त्या तत्तदधिकारसूत्रान्यमस्यापदस्यैवेति न वक्ष्यमाणातिप्रसक्त्यादिप्रन्यासगतिरत आह—रिङिति । एतेन फलान्तरस्यवच्छेद, तमेवाह—एतेनेति । वक्ष्यमाणदोषगेत्यर्थं । इद ङित्त्व रिङादेशङित्त्वम्, तमत्र दोषमाह— हयवेति । अस्य भाष्येणेत्यत्रान्वय । उपदेशे इति । प्रयोजनविशेषनिर्देश विनोपदेश इत्यर्थ । वृक्षस्त-

1. निर्दिष्टत्वात् प्रागुक्तरीत्या यथासम्भव निर्दिष्टत्वात् । एवं च

विरोधात् । अनया परिभाषया 'येन विधि—' इति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनम्, 'यदागमा—' इति लब्धस्य च । तेन सुपद उदस्थादित्यादिसिद्धिः । अनया च स्वस्वनिमित्तसंनिधापितानाम् 'अलोऽन्त्यस्य' इत्यादीनां समावेश एव, न तु बाध्यबाधकभावः, विरोधाभावात् । नाप्यङ्गाङ्गिभावः, उभयोरपि परार्थत्वेन तदयोगात् । 'अनेकाल्शित्—' इति सूत्रे सर्वस्य एतत्परिभाषाबोधित एव गृह्यते । यत्तु—'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येतावेतद्बाधकाविति; तन्न, उदस्थादिति सूत्रविषये अस्या 'पादः पत्' इति सूत्रे भाष्ये संचारितत्वात् । नाप्येतयोरियं बाधिका, एतयोर्निर्विषयत्वप्रसङ्गादिति 'ति विंशते—'

---

**श्चेति** । 'अलोऽन्त्यस्य' इत्यन्त्यस्य सत्वसिद्धिरिति भावः । **विरोधादिति** । तत्रापि धर्मग्रहणेन त्वद्रीत्या एतदप्रवृत्त्यापत्तेरिति भावः । नन्वन्तरङ्गत्वादस्या 'यदागमा—' इति न्यायमात्रबाधकत्वलाभात् सुपद इत्याद्यसिद्धिः । सामान्यतः सर्वबाधकत्व तु 'अस्य च्वौ' इत्यादुक्तरीत्या दुर्वचम् । अत पर्यवसितमाह— **अनयेति** । तथा चोपस्थितत्वेन तयोक्तावपि तत्तस्याप्युपलक्षणमिति भावः । 'पदाङ्गाधिकारे—' इत्यस्य सूत्रप्रपञ्चत्वादाह— **येनेति** । **लब्धस्य चेति** । विशिष्टस्य तत्त्वाभावबोधनमित्यर्थः । अनेनैव क्रमेण तयोरुदाहरणे आह— **तेनेति** । अस्य वचनस्य तदुभयबाधकत्वेनेत्यर्थः । कस्यचिदुक्तिं खण्डयितुं सिद्धान्तमाह— **अनया चेति** । 'सह' इति शेषः । 'एरनेकाच—' इत्यादाविति भावः । **समावेश एवेति** । अधिकृताङ्गादि ग्रहच्छेदद्वारा एतद्व्यवस्थापकत्वस्य तथा समत्वादिति भावः । **विरोधेति** । 'तैरितत्साध्यफलस्यैव तत्र साध्यत्वेन तदभावादित्यर्थः । नन्वेवमङ्गाङ्गिभावापत्तिरत आह— **नाप्यङ्गेति** । **परार्थत्वेन** विध्युपकारकत्वेन; 'गुणाना च—' इति न्यायात् । नन्वेवमपि 'येन विधि—' 'यदागमा—' इत्युभयबोधितस्थानिन 'अनेकाल्—' इत्यत्र सर्वपदेन ग्रहणादनया सह तस्य विरोध समत्वेन बाध्यबाधकभावापत्त्या परत्वात् 'अनेकाल्—' इत्यस्य प्रवृत्त्या सुपदो निरन्तरसानित्यासिद्धिरेवात आह— **अनेकालिति** । एवेन तदुभयबोधित ग्रहणमिति । तथा [illegible] तेनापि समावेश एव । 'पद्दन्नोमास्—' इत्यादावपि आदेशः पाणिनिकृतस्यानुच्चारणानुमानात्तेषा व्यवस्थार्थत्वाद्वा न दोष इति भावः । **उदस्थादिति सूत्रेति** । 'पादः पत्' इति सूत्रभाष्ये उदस्थादिति लक्ष्ये 'आदेः—' इति मतविषये अस्या संचारितत्वादित्यर्थः । किं चोक्तरीत्या व्यवस्थापकत्वे समवति बाधकत्वकल्पनानौचित्यादित्यपि बोध्यम् । **एतयो** पूर्वोक्तयोस्तया । **निर्विषयत्वेति** । क्वचिदनया सिद्ध । क्वचिदन्या-

पक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च । परिभाषार्थस्तु— अन्तोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्प्रकृतिरिति— बहिष्पदेन बहिरङ्गं तस्य भावो बहिरङ्गत्वं तत्प्रयुक्तासिद्धत्वस्य न प्रवृत्तिः न प्राप्तिरिति, 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्युक्त्वा 'नाजानन्तर्ये—'

---

मेव । अथ तत्प्रतिपन्थ्योऽपि शास्त्रीय कार्यम्, तर्हि उक्तरीत्या ओसिचादिदस्य पन्नेन नः पूर्वपदहासपाधित्वेन द्वयोरसमत्वात् ज्ञापक युक्तमेव । किं च न पदद्वयसन्धिकर्म- द्वयापेक्षत्वेन तन्यम्, उक्तहेतोः; क्त्विल्वलोमिरतत्वादिनेति तत्र पन्थस्यैव तत्त्वदु- क्तमत्र तत् । तथा घटकत्वाङ्गीकारे न मानम् । तुको ज्ञापकत्वे इष्टापत्तिरस्ते । अत एव सामान्यतो भमवतोसमत आह— द्वैपेति । अणिर्यंगोद्देशसमुदायक । यत्तु हरदत्तसीरदेवादयः— द्विवचनान्तेन समास' । 'द्वयम् अस्ति' इत्यध्याहारः । अचंगनन्तर्ये यत्र द्वयमस्ति— बहिरङ्गं प्रवृत्तमन्तरङ्गं प्राप्नोति, अन्तरङ्गम प्रवृत बहिरङ्ग वा; तत्र बहिरङ्गपरिभाषा नेति परिभाषार्थः । तथा चान्तरङ्गे बहिरङ्गे उभयत्र वाचांऽजानन्तर्ये बहिरङ्गपरिभाषाप्रवृत्तिर्नेति फलितमित्याहुः; तत्र, एतज्ज्ञापकपरहातिग्रहणवैयर्थ्यापत्तेः पचावेदमित्याद्यसिद्धवापत्तेः 'न धातुलोपे—' इति सूत्रस्थभाष्यविरोधापत्ते' धर्ममाह- क्रमानविरोधापत्तेश्च । यदपि सीरदेवास्य — संहिताधिकारीयकार्ये कर्तव्ये प्रागुक्तस्थले तस्य तदानन्तर्ये तदप्रवृत्तिरित्यर्थान्तरमाहुः, तदपि न, अक्षरमर्यादया तदर्थालाभात् उक्तान्यदोषावारणात् ज्ञापितेऽपि तस्याचारितार्थ्याच्च । यत्तु कैयटमाध्यादय — एक- वचनान्तेन समासः; न तु तथा, गौरवात् फलाभावाच्च । एव चोत्तरकालप्रवृत्तिकेऽच्य आनन्तर्ये तत्प्रतियोगिकानन्तर्ये निमित्तत्वेनाश्रिते तदप्रवृत्तिरित्याहु ; तत्र, अनुपदोक्ता- न्यदोषद्वयापत्तेरत आह— पदीति । अच इति सम्बन्धसामान्ये षष्ठी, न तु स्थानषष्ठी, मूलविरोधापत्तेः । अन्तरङ्गे आनन्तर्ये चान्ययोऽस्य । तत्र अच्प्रतियोगिकानन्तर्यं इत्यर्थः । ज्ञापकस्य सजातीयविषयत्वादाह— जातस्येति । परिशेषादाह— बहिरङ्गस्येति । यद्यपि तादृशेऽन्तरङ्गे कार्ये बहिष्टशब्देन परिभाषा गृहीत्वा तदप्रवृत्तिरित्यर्थः सुवचः; तथापि त्वासगतिर्जातस्येति सजातीयार्थालाभश्च स्यादत आह— बहिष्पदेनेति । भाव इति । अग्रे 'बहिष्टम्' इति शेष । शक्तित्रय एव एव । तदर्थमाह— बहिरिति । प्रकरणापि तस्य निषेद्धुमशक्यत्वादाह— तन्त्रेति । स्वन्तरङ्गे इत्यस्य लाभे उक्तार्थस्य लाभ ; स एव न, अक्षरमर्यादया तदलाभः । देहलीदीपकत्वे तु किमि- ' ति प्राचीनोक्तार्थत्यागोऽत आह— असिद्धमिति । [illegible] । विशिष्ट-

इति वक्ष्यामि' इति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात् । तेन पपावेदमित्यादौ न दोषः, अन्तरङ्गस्याच्यानिकार्यस्यैत्वस्यान्यानन्तर्यनिमित्तकत्वाभावात् । जातस्य बहिरङ्गस्येत्युक्त्या अयजे इन्द्रं धियतीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एव 'इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात् ।

---

भाष्योक्तरीत्यर्थः । तथा च भष्यानुपूर्व्यैवेद्मीति तत्र क्त्वाप्रत्ययेन तदानन्तर्यमनुकूरयत्युक्तम् ; अन्यथा क्त्वान्तासमर्थतः स्पष्टत्व ; तदाह— तत्रेति । यद्दर्शन वारणं तत्सूचयितुं तद्रूपं तेनेत्यस्यार्थमाह— अन्तरङ्गेति । यद्यपि धातोरिति प्रकृतम्, तथापि तद्विहितविशेषणम् । एवं च तत्र तत्त्वमनैमित्तिकत्वेन पूर्वनिमित्तकत्वेनान्यनिमित्तकत्वेन वा बोध्यम् । जातस्येतिमात्रस्य फलमाह— जातेति । यत्तु सौन्दर्यादयः— असिद्धमित्येकस्या एवाङ्गीकारे अयजे इन्द्रमित्यादौ दीर्घोत्कार' पदसंस्कारपक्षेण । यदाहु.— 'सुविधार्यं परस्यार्थे वाक्यं गृह्णन्ति सूरय' इति । युक्तं चैतत् ; अन्यथा तत्र पक्षे भिन्नपरिभाषाङ्गीकारेऽपि शब्दपाविप्रतिषेधेनान्तरङ्गत्वाभावात गुण बाधित्वा दीर्घ एव स्यात्, न्यायतो वचनस्य प्राबल्यादित्याहु'; तन्न, तावताप्यन्यत्रानिर्वाहात् शब्दतः परत्वमादाय विप्रतिषेधसूत्राप्रवृत्तेः 'अचः पर—' इति सूत्रे भाष्ये ध्वनितत्वाच्च; तदेतद्ध्वनयन् तस्य फलान्तरमाह— धियतीति । आदिना प्रादुदुवदित्यादिसंग्रहः । अत एवात्रोभयत्र तथावर्तमानान्तरङ्गत्व बोध्यम् । यद्यपीयङ्विधावजादौ प्रत्यय इति धातोर्विशेषणमिति न तस्यान्यानन्तर्यम्, तथापि विशेषणतया तदस्त्येव । यदि तु प्राधान्येनाच एवान्यानन्तर्यं स्यादर्थ', सम्भवात् । इयङ्विधौ तु न तथेति विभाव्यते, तदाद्यमेव प्रत्युदाहरणम् । अत एवोद्घोतविरोधो न । 'पुगन्त—' इत्यत्र सिद्धान्ते प्राधान्येनाप्राधान्येन च न तस्य तदाश्रयणमिति नाठ्ग्रहणज्ञापकत्वपरभाष्यासंगति. । दीक्षितमते अयमपि तत्र दोषो बोध्य' । एतेनेयङ्विधावचोऽन्यानन्तर्यानाश्रयणादिदं फलं चिन्त्यम् । यथा कथंचित्तत्वे प्रागुक्तोऽठ्ग्रहणज्ञापकपरत्वमन्यथाविरोध इत्यपास्तम् । ननु प्रादुदुवदित्यादौ 'सार्वधातुक—' इति गुणात्प्राक् नित्यत्वाच्चङि 'द्विर्वचनेऽचि' इति निषेधादुवङभावे द्वित्वात्परत्वाल्लघूपधगुणो दुर्वार इति चेत्, न ; अन्तरङ्गत्वाद्द्वित्वस्यैव प्राप्तेः । तस्य तत्त्वं च प्रयोगीयोच्चारणेत्याद्युक्तरीत्या । द्वित्वादुपधाकार्यप्राबल्येऽपि यथा न दोषस्तथान्यत्र स्पष्टम् । दीर्घेति । सवर्णदीर्घलघूपधगुणादेरित्यर्थः । अत्रार्थे वार्तिकमपि प्रमाणयति— अत एवेति । जातस्येत्यर्थाङ्गीकारादेवेत्यर्थ. । एवमग्रेऽपि । अत्राद्यम् 'विप्रतिषेधे—' इति सूत्रस्थम्, अन्यम् 'क्ङिति च' इति सूत्रस्थम् । आदिना 'बहिरङ्गेण सिध्यति' इत्यादिपरिग्रहः ।

'शचङन्तस्य अन्तरङ्गलक्षणत्वात्' इत्यादिकं संगच्छते। अत एव 'ओमाङोश्च' इत्याङ्ग्रहणं चरितार्थम्। तद्धि शिव आ इहि इति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद्गुणे वृद्धिबाधनार्थम्। न चाक्षयूरित्यत्र यणि कृते ऊठोऽसिद्धत्वाद्वलिलोपापत्तिरिति वाच्यम्, अचोऽन्यानन्तर्यनिमित्तके अन्तरङ्गे कर्तव्ये, कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति तत्र च कर्तव्ये, नासिद्धत्वमित्येतदर्थात्। असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे स्वस्या वैयर्थ्यम्, तेनैव सिद्धे। अत एव 'नलोप सुप्—' इति सूत्रे कृति तुग्ग्रहणं चरितार्थम्; अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्यान्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया

---

सूत्रमप्यत्रार्थे प्रमाणयति— अत एवेति । अन्यथा तदानर्थक्यं ध्वनयितुमाह— तद्धीति । निमज्यान्याख्याने इदम् । धातूपेति । क्रियाया साध्यतया धातुत प्रतीत्या सर्वत प्राक् साधनाकाङ्क्षानियत्वेन तद्बोधकप्रत्ययोत्पत्त्यनन्तर प्राक् स्वार्थद्योतकत्वेन साकाङ्क्षतया धातोरुपसर्गयोगे तत शिवशब्दस्य समुदायेन योगाङ्गस्यान्तरङ्गत्वमिति 'सम्प्रसारणाच्च' इति सूत्रभाष्योक्तया धातूपसर्गकार्येऽपि प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वेनैवान्तरङ्गत्वम्, न तु तत्त्वेन । एतेन पञ्चमान्तरङ्गत्वस्याभावेनेह चिन्त्यमित्यपास्तम् । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्—' इति न्यायेनास्य तादृशार्थज्ञापकतापि प्रागुक्ता अविरुद्धा, अन्यथा आनर्थक्यमेवेति भाव । हरदत्तादिकैयटादिमतसाधारण दोष स्वमतेनाशङ्कते— न चेति । अत एवेत्यनुक्ति । असिद्धत्वात् परस्थितनिमित्तकत्वेन बहिरङ्गत्वेन 'असिद्धं बहिरङ्गम्—' इत्यनेन । निषेधस्तु न कस्यापि मते, पूर्वस्थितनिमित्तकत्वेन अन्तरङ्गलोपस्याप्यसन्धिकार्यत्वाभावात् । यणस्तेनैवासिद्धत्वं तु न, समत्वेनातत्त्वात् । कैयटहरदत्तादिमतेन समाधत्ते— अच इति । कृते चेति । 'न मु ने' इतिवदिति भाव । एतदर्थात् उक्तपरिभाषार्थात् । एतदङ्गीकर्तृवृद्धाद्वारणकारोक्तिं खण्डयति— असिद्धेति । अनित्यत्वेनेति । अस्याप्राप्त्येति शेष । तद्वारणे लोपापत्तिवारणे । अस्याः नाजानन्तर्य इत्यस्या । तेनैव अनित्यत्वेनैव । इष्टापत्तिं खण्डयति— अत एवेति । परिभाषास्वरूपस्येर्ष्य । अन्यथा अनित्यपरिभाषयैव निर्वाहादेतदनङ्गीकारे । स्वाश्रयत्वेन तन्निमित्तकत्वेन । तया च परम्परया निमित्तत्वेन बहिरङ्गत्वस्य कथंचित्कल्पनयापि स्वीकार इति भ्यान्निमित्तकत्वेन परनिमित्तकत्वाद्बहिरङ्गत्वं बोध्यम् । 'नलोपस्यासिद्धत्वम्' इति पाठ । न चानित्यत्वात्तदप्रवृत्ति, इष्टस्थलेऽप्यप्रवृत्तौ न्यायस्य निष्प्रयोजनतापत्ते । अत एवायुक्तमर्थ-

नलोपस्यासिद्धत्वेन सिद्धेः तद्वैयर्थ्यं स्पष्टमेव । मम तु तुकि अजानन्तर्यसत्त्वान्न दोषः । न चैवं सति 'ह्रस्वस्य पिति—' इति सूत्रभाष्यविरोधः; तत्र हि ग्रामणिपुत्र इत्यत्र 'इको ह्रस्वोऽङ्यः—' इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्; 'नाजानन्तर्ये—' इत्यस्य सत्त्वे तत्र तदप्राप्तेरसंगतिः स्पष्टैवेति वाच्यम्, तेन भाष्येणास्या अनावश्यकत्वबोधनात् एतज्ज्ञापकेन अन्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात् । अत एव 'अचः परस्मिन्—' इति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्य तया असिद्धत्वात्पूर्वयणादेशः साधितः । अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता । अत एवान्तरङ्गपरिभाषामुपक्रम्य, विप्रतिषेधसूत्रे 'अस्या बहूनि प्रयोजनानि सन्ति;

---

माह— **मम त्विति** । परिभाषाङ्गीकर्तुरित्यर्थः । तुकि तद्विधायके 'ह्रस्वस्य—' इति सूत्रे । **अजेति** । अचोऽन्यानन्तर्याश्रयणसत्त्वादित्यर्थः । तया चानसिद्धत्वेन तद्वारणाय तदावश्यकमिति भावः । **चैवं सति** परिभाषाङ्गीकारे सति । **तुकमिति** । प्रत्ययलक्षणेन क्विपमाश्रित्येति भावः । **बहिरिति** । ततो बहिर्भूतोत्तरपदनिमित्तकत्वेन परनिमित्तकत्वादिति भावः । एवं सतीष्टयुक्तार्थमाह— **नाजेति** । **तत्रेति** । ग्रामणिपुत्र इत्यत्र ह्रस्वे बहिरङ्गासिद्धत्वाप्राप्तेरुक्तभाष्यासंगतिरित्यर्थः । **अस्याः** नाजानन्तर्य इत्यस्याः । ननूक्तादिफलानां ज्ञापकानां च सत्त्वात्कथमनावश्यकत्वमत आह— **एतदिति** । 'नाजानन्तर्ये—' इत्येतज्ज्ञापकत्वाभिमतेन 'षत्वतुकोः—' इति तुग्ग्रहणेनेत्यर्थः । **न्याय्यत्वादिति** । वचनाकल्पनलाघवादिति भावः । एवः परिभाषाव्यवच्छेदाय । न्याय्यत्वमेवोपपादयति— **अत एवेति** । अस्या अनावश्यकत्वेनासत्त्वादेवेत्यर्थः । तया असिद्धपरिभाषया । **साधित इति** । एतत्सत्त्वे तु निषेधात्तदसंगतिः स्पष्टैव । ननु नेदं युक्तम्, एतत्सत्त्वेऽपि प्रागुक्तरीत्या तत्राप्राप्तेरत आह— **अत एवेति** । उक्तोऽर्थः । **पुनः क्वापि** विप्रतिषेधसूत्रातिरिक्ते । अन्येषामपि तत्र फलानामुल्लेखेनावश्यकत्वमेव; न हि बहुत्वेन आवश्यकत्वसाधकोऽतिप्रसङ्गापत्तेरत आह— **अत एवान्तेत्यादिभाष्य इत्यन्तेन** । 'सम्प्रसारणाच्च' इति सूत्रे भाष्येऽन्तरङ्गपरिभाषामुपक्रम्य इत्युक्तमित्यन्वयः । इतीति किम्? तदाह— **विप्रेति** । 'इदं तर्हि प्रयोजनम्— वृक्षा भ्रमेत्यत्र विभक्त्यन्ताख्याने वृक्ष भ्रम् अत्र इति स्थिते ह्रस्वे उत्वसवर्णदीर्घयोर्युगपत्प्राप्तौ प्रादुर्भावादन्तरङ्गत्वात्पूर्वं सवर्णदीर्घः । तथावश्यमिदमेव फलम्' इत्यादिः । **अस्याः** अन्तरङ्गपरिभाषायाः । ननु नैतावतैतस्मा-

तदर्थमेषा परिभाषा कर्तव्या। प्रतिविधेयं दोषेषु' इत्युक्तम् 'संप्रसारणाच्च' इति सूत्रे भाष्ये। प्रतिविधानं च परिभाषाविषये अनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥

---

घसिद्धि, अनेन फलानामन्यप्रतिविधानानां च तन्त्रोक्तत्वव्याजानन्तर्य इत्यस्या अपि तत्त्वेन तन्त्रोक्तत्वादत आह— प्रतीति। परिभाषाविषये असिद्धपरिभाषायें। एतेन विप्रतिषेधसूत्रोक्तप्रतिविधाननिरासः। ध्वनितमिति। 'प्रतिविधेयं दोषेषु' इति विधिप्रत्ययान्तप्रकृतिकैकवचनान्तबहुवचनान्तदोषशब्दप्रयोगेण' इति शेषः, तथात्वे तु दोषेषु प्रतिविधानान्युक्तानीति वदेत्, तन्त्रोक्तत्वादत्र नैव वा वदेत्। तस्मात्सर्वदोषेष्वेक प्रतिविधानं ततोऽन्यत्कार्यमिति तदर्थः। तथा तु तदनित्यत्वमेव नान्यथा, विप्रतिषेधसूत्रस्थभाष्योक्तिरेकदेशिन इति तत्तात्पर्यम्। तथा प्रतिपादकसीरदेवादयोऽपि चिन्त्या एव। अक्षद्यूरित्यादावनित्यत्वादेव निर्वाह इति तदर्थमाश्रयणं कृता न। अत एव निर्मूलापि, मूलशैथिल्यात् तुगेकादेशयोः प्रत्येकं निमित्तद्वयापेक्षत्वेन समत्वात् अन्यस्य तत्त्वस्य दुर्वचत्वाच्च तथापठकत्वाङ्गीकारेऽतिप्रसङ्गापत्तेश्च। एवं चैतज्ज्ञापकपरम् 'विप्रतिषेधे—' इति सूत्रस्य भाष्यमनेदयुक्तिरेव। अत एव तत्र भाष्ये ज्ञापकानुपादानं सामान्योक्तिश्च। अत एव तुग्ग्रहणमावश्यकमेवेति भावः। नन्वेवं वृहद्विवरणासैरीपत्समर्थनेऽपि कृति तुग्ग्रहणवैयर्थ्यापत्तिरेवेति चेत्, इष्टापत्तेः, सन्निपातपरिभाषयैवासिद्धिमाश्रित्य भाष्ये तस्य प्रत्याख्यानादिति केचित्। तस्या अनित्यत्वमेव तेन ज्ञाप्यत इति न वैयर्थ्यमिति सीरदेवादयः। वस्तुतस्तु सन्नाङ्गत बहिर्भूतनिमित्तकसन्नाङ्गत व्यवहितनिमित्तकृतं च बहिरङ्गत्वं नाश्रीयते इत्यर्थज्ञापकतया तत्साफल्यस्य प्रागुक्तत्वेनासिद्धपरिभाषया सिद्धयभावः। एवं चासिद्धत्वादिनिर्दोष इत्यन्ततया सिद्धिमाश्रित्यैतत्प्रत्याख्यातमित्यन्यदेतदिति न दोषः। अत एव पूर्वापरग्रन्थविरोधो न। प्रागुक्तिः प्राचां तथा बहिरङ्गत्वमङ्गीकुर्वतामनुरोधेन। अत एव पूर्वापरग्रन्थविरोधो न। किं चैतत्सत्त्वेऽपि 'कृते च' इत्यादिद्वितीयार्थानुपयोगः, अक्षद्यूरित्यत्रोठोऽसिद्धत्वाद्वलिलोपप्राप्तेः 'अचः—' इति स्थानिवद्भावेन सुवारत्वात् प्रत्येषिषन्नित्यादौ जुसोऽभावाय पञ्चमीसमासस्यावश्यकत्वात् प्रतिगणय्येत्याद्यर्थे तदनित्यत्वेऽपीष्टस्थले प्रवृत्तेः प्रत्यूहत्वात् पूर्वस्मान्निमित्तत्वेनाश्रितादिति कैयटस्य दूषितत्वात् स्वविधावित्यस्य स्वोद्देश्यकविधौ प्रवृत्ते। न च 'न पदान्त—' इति निषेधः, उक्तोक्तत्वात्। एवं च तथार्थकरणं प्रागुद्योतादौ च पञ्चमीसमासानङ्गीकर्तृमतानुरोधेनेति न तद्विरोध इति बोध्यम्, तदाह— इत्यलमिति ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वा अन्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युरत आह—

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५३ ॥

अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रं ज्ञापकम्। त्वदङ्गमित्यादौ लुगेकदेशान्तरङ्गत्वाद्विभक्तिनिमित्तकेन 'त्वमावेकवचने' इत्यनेन सिद्धे इदं व्यर्थं सदेतज्ज्ञापकम्। ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तत्त्वमादिबाधनार्थं तदावश्यकमिति चेन्, एवं तर्हि अन्त्यमपर्यन्तग्रहणानुवृत्तिरस्मज्ज्ञापिकेति भाष्याशयः। युष्मदादिभ्य आचारक्विप् तु न, संपूर्णसूत्रस्य ज्ञापकत्वपरभाष्यप्रामाण्यात् 'ह्रस्वनद्यापः' इति तद्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभा-

वाच्च । एवमनेकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकप्रकृतिकणिनोऽप्यनभिधानं बोध्यम् । एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् । ननु मप-र्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था; न च 'उत्सर्गसमानदेशा अपवा-दाः' इति न्यायेनासिद्धत्वत्सूत्रस्थभाष्यसंमतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृ-त्तिर्व्यर्थेति वाच्यम्, तस्य 'नमकृजादौ व्यभिचारादिति चेत्, न; 'नमि मित्त्वेन बहूनि पुरस्तादृग्रहणेन अस्मिन् प्रावृट्ग्रहणेन तस्य बाधेऽप्यन्त्योत्सर्गस्य स्थाने मानाभावात् । अत एव 'तरिभ्याणि च—' इत्यनेन युष्मावाद्यादे-

---

अजन्ता हलन्तेभ्य आचार्यविशेषीय मतम्, 'सर्वप्रातिपदिकेभ्य — इत्यस्य तस्मात्, तन्मताश्रयणेऽपि एतद्भाष्यविरोधस्तदभाव एव' इति 'नगद' । अप्रगल्भार्थो स्वकारान्तरस्य प्रश्लिष्टस्यानुबन्धयत्नोपाधाय हलन्ततेति तद्भाव । एवमिति । जिनदेशेऽयं । प्राति-पदिकाभ्यां युष्मदस्मद्भ्याम् । इत्यन्तमतनिरासायाह— प्रातीति । तदा हि प्रायुक्त-त्वर्थतैव भवेत् । अपिना अत्यन्तस्यार्थैकतरत्वादेरपि संग्रह । अनभिधानमिति । आय-तोरिति भाव । अत बोध्यमित्यनेन सूचितानिरस्तु तस्यैकदेशस्तुल्यरूपतेऽपि नेद युक्तमिति । प्राचोक्तं दूषयति— एतेनेति । त्रिवृन्मात्रेनेयं । तत्रेति । द्विवि-त्वमोक्षार्थमिदं । यत्तु नैयटादय — तदनुवृत्ति केवला इयगिन्ता; तदभावे हि आदेशान्तरागामपि बाधको तौ सर्वादेशौ स्याताम्, अनेकाल्त्वात् । 'उत्सर्गसमान—' इति तु भ्रमादौ व्यभिचारितम् । तस्मात्तवादीनां प्रसङ्गे इत्यर्थद्वारा स्थानिप्रकल्प्यतां या तथाप्यनुवृत्ति, न तद्विना तदनुवृत्तिसाधिना, केवला हि तदनुवृत्तिर्लाघवाय स्यात्; गरीयसी हि तथाप्यनुवृत्त्या इदानिप्रतीतिरिति तत्ख्यापनाय न भवेदिति; तदयुक्तमति-गुरुत्वादिति ध्वनयन्नाह— नन्विति । अपि सूत्रसमुच्चायक । अप्रामाण्यनिरासायाह— असिद्धवदिति । तदनुवृत्तिः मपर्यन्तग्रहणानुवृत्तिः । तस्य उत्सर्गसमानेति न्यायस्य । आदिना बहुचो ग्रहणम् । भ्रमीति । अनयक्तिनोऽधिकरण विवक्षया सप्तमी, यद्वा तस्य 'बाधेऽपि' इत्यनान्वय । अत एव बहुची याविदमदति । पुरस्तादिति । तद्विधि-सूत्र इति भाव । एवमग्रेऽपि । तस्य उत्सर्गेति न्यायस्य । अत्र तमयोः । उत्सर्गस्य बाधाभावे सर्वत्र प्रवर्तमानस्य 'उत्सर्ग—' इति न्यायस्य, अत एव वक्ष्यति— उत्सर्ग स्वीक्रियत इति । प्रत्युत तदाकार एव मानमित्याह— अत एवेति । तस्य ताद्दृश

शविधानं चरितार्थम्; अन्यथाकङादेशमेव विदध्यात्। आकङि तवकममकादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिः; अतस्तद्विधानम्। इदमेव च तज्ज्ञापकम्। यद्यपि विरोधे बाधकत्वमिति वार्त्तिकमतेऽयं न्यायः। भाष्यकारस्तु विनापि विरोधं सत्यपि संभवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमः; तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः। एतद्भाष्यमपि तत्स्वीकारे मानम्। एवं च मपर्यन्तानुवृत्तिस्त्वत्कृतमित्यादौ मपर्यन्तस्यादेशविधानार्था; तत्र च मपर्यन्तेऽन्तरङ्गत्वात् 'त्वमौ—' इत्येव सिद्धे व्यर्था सैतज्ज्ञापिका। ज्ञापिते त्वस्मिन्नेतद्विषये तवादी-

---

सार्वत्रिकत्वाङ्गीकारेणेत्यर्थः। अन्यथा व्यभिचारेण तस्यैवानङ्गीकारे। प्रतिपादितलाघवायाह— आकङीति। अन्यथा आकङमेव विदध्यात्; अस्य ङित्वादन्त्यादेशत्वेऽप्यपवादयोस्तवकममकादेशयोरनेकाल्त्वात्सर्वादेशत्वसिद्धिरिति भावः। तद्दूषयन्नाह— आकङीति। 'क्रियमाणे सति' इति शेषः। उक्तेति। उत्सर्गेत्यर्थः। तद्विधानं युष्माकाद्यादेशविधानम्। ननु तस्य भाष्यसम्मतत्वतत्साफल्यस्वीकारितयोरपि मूल एव कुठारः, अत आह— इदमेवेति। युष्माकाद्यादेशविधानमेव चेत्यर्थः। ज्ञापिते चारितार्थ्यं सूत्रमेव। विरोधे तत्रैव। अयमिति। उत्सर्गेत्यर्थः। विरोधो ह्यपवादस्यैव बाधे कारणम्, न विशेषविधानमेव; स च समानदेशत्वे सत्येव घटते नान्यथेति तन्मते तस्यावश्यकत्वमिति भावः। अपिना विरोधसमुच्चयः। बाधकत्वमिति। 'विशेषविधानमात्रेण' इति शेषः; तक्रकौण्डिन्यन्यायप्रवृत्तिर्न नेति न्यायेनेति भावः। ननु सत्यपीत्याद्यभिप्रायासंभवस्यापि बाधहेतुत्वस्वीकारे उत्सर्गस्वीकारोऽत्र मते दुर्घटोऽत आह— नायं नियम इति। एवं च तेनानिर्देशान्मपर्यन्तानुवृत्तिः सफलेति कथं ज्ञापकतेति भावः। उत्सर्गः उक्तोऽर्थः। स्वीक्रियत एवेतीति। अन्यथा तद्वैयर्थ्यापत्तिरिति भावः। प्रकृते त्यादिविषये। ननु यथोत्तरं मुनीनां प्रामाण्यादनियम एव युक्तः; नोत्सर्गस्वीकारोऽत आह— एतदिति। मपर्यन्तग्रहणानुवृत्तिज्ञापकपरेतद्भाष्येत्यर्थः। एवं च द्वयोः समन्वये नेष्टौ व्यवस्थया युष्माकाद्यादेशविधानसहकृतभाष्येण प्रकृते तथैवाङ्गीक्रियत इति तदनुवृत्तिज्ञापकता सुलभा; तदाह— एवं चेति। प्रकृते तन्न्यायाङ्गीकारेण त्वत्पुत्र इत्यादौ बाध्यबाधकभावेन सूत्रेण निर्देशेन सूत्रसाफल्ये चेत्यर्थः। विधानार्थेति। अस्य व्यर्थेति शेषः। तत्र च त्वम्भूतमित्यादौ च। अन्तरङ्गत्वादिति। 'उत्तरोत्तरप्रसङ्गापेक्षया' इत्यादिः; तत्र तदनुवृत्तेः साध्यत्वादिति भावः। अस्मिन् 'अन्तरङ्गानपि—' इति न्याये। एतद्विषये मपर्यन्तर-

अन्ये— अन्तरङ्गांश्च विधीन् सर्वोऽपि लुग्बाधते, न सुब्लुगेव। अत एव सनींसंस इत्यादौ नलोपो न भवति। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात्प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम्। एतद्विरोधात्, यत् 'तद्राजस्य—' इति सूत्रे कैयटेनोक्तम् अङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात् 'तद्राजस्य' इति लुङ् न स्यादिति शङ्कापरभाष्यव्याख्यानावसरे— 'अन्तरङ्गानपि—' न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं

---

प्रधान चा। लुक् तु समुदायनिमित्तक इति भेदादिति केचित्। अन्ये तु तस्य प्रसक्तवर्णादर्शनमात्र निमित्तम्, लुकस्तु प्रसक्तप्रत्ययादर्शनमिति भेदेन तत्त्वमित्याहुः। वस्तुतस्तु अन्तरङ्गानपि विधीन् बाधमानो लुक् बलवानिति अतुल्यबलेन लोपेन स्पर्धा नार्हतीति विप्रतिषेधो नोपन्यसनीय इति हि तत्र कैयटेनोक्तम्। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इत्यस्य अल्पर्थान्तरेऽत्र ज्ञापितत्वादिसद्धमिति विप्रेति सूत्रे उक्तम्; तस्यायं भावः— आभ्यां पानित्ययोः समहात्परनित्यान्तरङ्गबाधकत्वेनापवादतुल्यत्वप्रतिपादने विप्रतिषेधसूत्रादीनां तद्विषयेऽप्राप्तिरिति च तस्यान्तरङ्गत्वाद्यपेक्षेति। अत एव तत्रान्तरङ्गत्वानुपपादनमिति बोध्यम्। अन्ये 'न यासयोः' इत्यादौ। चोऽप्यर्थे। उक्तार्थं द्रढयति— अत एवेति। न्याये लुङ्मात्रग्रहणादेवेत्यर्थः। अस्योभयत्रान्वयः। नलोप इति। अन्यथा यडन्तादपि पूर्वोपस्थितनिमित्तकत्वेन अन्तरङ्गत्वात् 'यङोऽचि' इति लुकः प्राक् 'अनिदिताम्—' इति स्यादिति भावः। पञ्चेति। अत्र 'टापा सह' इत्यादिः। लुगिति। लुक् च भवतीत्यर्थः। अन्यथा अत्रोक्तरीत्या न्यायाप्रवृत्तौ। कृतैकादेशस्येति॥ टाप इत्यर्थः। विभज्यान्वाख्याने अप्रधानाख्याने च पक्षेत्यादावनिषान्तरङ्गत्वादिति भाव.। 'आदिवृत्त्या टाब्ग्रहणेन ग्रहणाल्लुक्तद्धितेति' इति शेषः। तत्र हि 'स्यकनः प्रतिषेधः' इति वार्तिकखण्डनाय 'मृदास्तिकन्' इतीत्वनिर्देशस्य ज्ञापकत्वे भाष्योक्ते ज्ञापकताखण्डनाय पञ्चमृत्तिक इत्यादौ क्रीतार्थठकः 'अध्यर्ध—' इति लुकि 'लुक्तद्धित—' इति टापो लुकि ह्रस्वमात्रादित्वाप्राप्त्यनित्यत्वनिर्देशः सफल इत्युक्त्वा तदुपपादनाय अन्तरङ्गत्वेत्युक्तं तेन। नन्वेत्र कैयटयोः पूर्वापरविरोधोऽत आह— एतदिति। उक्तभाष्यकैयटद्वयेत्यर्थः। अयं च प्रोक्तस्ये हेतुः। तत्सूत्रे तदवसरे इयोशङ्क्य, इति यत्तेनोक्तं तदुक्तविरोधात्प्रौढिरिति इष्टव्यमित्यन्वयः। अङ्गानिति। अत्र 'प्रत्ययग्रहणपक्षे' इत्यादिः। सुपः शसः। अयं लुक् 'तद्राजस्य—' इति लुक्। एष च

परस्य' इति वृद्धिनिषेधो व्यर्थ । अन्तादिवद्भावस्तु उभयत आश्रयणे निषिद्ध । किं च वृद्धिरप्यत्र न प्राप्नोति, अन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वेन एकादेशविशिष्टे पूर्वपदत्वे न्द्रशब्दस्यैकदेशविकृतन्यायेन 'उभयत आश्रयणे नान्तादिवत्' इत्यस्याभावेन तदाश्रयणे वोत्तरपदत्वेऽपि तस्यानच्कत्वात् एकस्यैकादेशेना परस्य नित्येन 'यस्य—' इति लोपेनापहारात् । न च परादिवद्भावेनैकादेश-विशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्, उत्तरपदाद्यच्स्थानिकत्वा वृद्धेस्तदभावेनाप्राप्ते ताद्रूप्यानतिदेशात, अन्यथा खट्वाभिरित्यादावपि पूर्वान्त-

---

अन्तादीति । उभयत इति । पूर्वपरशब्दाभ्याम् अन्तादिशब्दाभ्यां च विरोधस्य पुर स्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्यैकत्र युगपदसम्भव, यथा द्वयोरेक प्रेष्यस्ताभ्यां युगपद्विप्रदेशकार्ययो प्रेरितोऽविरोधार्थी कस्यापि कार्यं न करोति, तद्वदिति न्यायसिद्धमिदम् । ननूभयत आश्रयणेऽन्तादिवत्त्वाभावेऽपि तद्रूपत्वे व्यपवर्गाभावेऽपि वा विकारविशिष्टे सौमेऽ-प्यन्तवद्भावेन पूर्वपदत्वे न्द्रशब्दे 'एकदेश—' इति न्यायेनेन्द्रशब्दत्वात्सामर्थ्यादस्य 'देवता—' इति प्राप्तवृद्धिनिषेध एवास्तु, अत आह— किंचेति । अपिरेवार्थे । अत्र सौमेन्द्र इत्यत्र । अन्तादीति । एतद्रूपोभयेत्यर्थ, उक्तनिषेधादिति भाव । न्यायेनेत्यस्य उत्तरपदत्वेऽपीत्य-त्रान्वय । ननु 'उभयत आश्रयणे—' इति निर्मूलम्, यतिघटितशास्त्रस्याहार्यारोपबाध-कत्वेन तस्य च विरुद्धविषयस्यापि युगपत्सम्भवेन लौकिकन्यायेनात्र तेनास्य सिद्ध्यभावात् अन्तादिवत्त्वेऽपि व्यपवर्गाभावेनोपसर्गात्परत्वस्येण्यभावनाभावादित्यादिदसिद्धेश्च । 'उपसर्ग-स्यायता' 'अन्तादिवच्च' 'न पदान्त—' 'गोस्त्रियो—' इत्यादिसूत्रभाष्ये तदुक्तेस्तत्र एकशासन इति स्पष्टमुक्तत्वादत आह— उभयत इति । तदाश्रयणे चेति । अन्तादिवत्त्वोभयाश्रयणे वेत्यर्थ । यद्यपि पक्षद्वयेऽप्याहार्यारोपबाधकत्वेन व्यपवर्गो दुर्निरूप, तथापि मूलमत्र नेत्याह— तस्येति । न्द्रशब्दस्येत्यर्थ । एत च न्द्रशब्दस्येन्येन पूर्वे पाठो बोध्य । अक्षेपाशानेन तस्यपाठो वा । अनच्कत्वे हेतुमाह— एकस्येति । प्रथमस्येत्यर्थ । अत एवाह— अपरस्येति । ननु परत्वाद्वृद्धिरस्तु, अत आह— नित्येनेति । एकेति । एन्द्रशब्दस्यैवेत्यर्थ, एकारस्याक्षान्वयात् । यद्वा यथाश्रुत एव, एकादेशविशिष्टस्य पूर्वपदत्वव्यवच्छेदक स । एवं चात्रान्मान्त 'एकदेश—' इति न्यायेन पूर्वपदत्व बाध्यम् । तत्संभव वृद्धिप्राप्तिसम्भव । एवं च निषेध सफल । तदभावेन आदिदेशाभावेन । ननु परादिवत्त्वेन तदादित्वस्याङ्ग आह— ताद्रूप्येति । पृथगवस्थिताभ्यामन्तरङ्गिताभ्यां ये व्यवहारा प्रत्यय प्रातिपदिकत्वसुबन्त इत्यादय, त एवैकादेशे पूर्वपरस्य इति भाव । अन्यथा ताद्रूप्यातिदेशे । अपि सद्राम्य इत्यादिमुपायत ।

वत्त्वेनादन्तत्वे भिम ऐमापत्तिरिति भाष्ये स्पष्टम्। अत एव पूर्वेषुकामशाम इत्यादावन्तरङ्गत्वादाद्गुणे वृद्धिर्न स्यादित्याशङ्कितम्। तदेकदेशमात्रस्य विकार-भावाच्च। तदुक्तं भाष्ये— 'इन्द्रं द्वावचौ। एको यस्येति लोपेनापहृत', अपर एकादेशेन। अतोऽनच्क इन्द्र संपन्न। तत्र कः प्रसङ्गो वृद्धे' इति।

मरुदादिभिरिन्द्रस्य द्वंद्वे इन्द्रस्यैव पूर्वनिपातोऽत आह—

**पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ॥८४॥**

अत्र च 'नेन्द्रस्य—' इति निषेध एव ज्ञापक इति 'अन्तादिवच्च' 'विप्रतिषेधे परम्—' इति सूत्रयोर्भाष्ये स्पष्टम् ॥ ८४ ॥

ननु एवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वादित्वादिषु कृतेषु ल्यप् स्यादत आह—

---

त्तेति। भिक्षादीनामिसाद्यापत्तिरित्यर्थः। भाष्ये 'अन्तादिवच्च' इति सूत्रे। अत एव ...। वृद्धि. 'प्राचा ग्राम—' ...दृष्यानतिदेशेनाशिवामावाच्च। पद्ग्येत्याशिवदन्तरङ्गत्वम्। आशङ्कितम् उभयत्र भाष्ये। समा-सेनेन। इषुकामशमीशब्दस्य प्राग्ग्रामवाचित्वात्। ...धिस्तु परिभाषाह्रूप एव। ननु सोमेन्द्र यथा 'एकदेश—' इति न्यायेन मान्तस्य पूर्व-पदत्वम्, तथैकदेशविशिष्टस्योत्तरपदत्वमपि स्यादिति वक्ष्यमाणभाष्यासंगतिरेवात आह— तदेकेति। गुणरूपविकारस्योत्तरपदैकदेशमात्रसम्बन्धित्वाभावात्तस्योभयस्यानिष्टत्वादि-त्यर्थः। एवं च यत्रानन्यवत्त्वम्, तदेकदेशमात्रविकारस्य तत्र ग्रहणमिति अत्रोभय तेन कर्तुमशक्यमिति भावः। तदुक्तम् तदेतदर्थमभिप्रेत्योक्तम्। भाष्ये 'अन्तादिवच्च' इति सूत्रस्थे। ननु माहेन्द्रमित्यत्र हलन्तपूर्वपदत्वेनैकादेशाभावाद्वृद्धिप्रसङ्गे निषेधः सफलोऽस्त आह— मरुदादिभिरिति। ननु पूर्वनिपातप्रकरणस्यानित्यत्वात्तथेति चेन्न, ज्ञापक-परोक्तभाष्यासंगत्यापत्त्या तेषामनभिधानादत आह— इन्द्रस्येति। निमित्तेति। बहुव्रीहिः। निमित्तत्वं च यथाकथंचित्। नेति। अस्य 'प्रवर्तते' इति शेषः। अत्र च उक्तपरिभाषाया च। यथा चैतत्, तथान्तरेण एवोक्तम्। भाष्य इति। तत्र लुक्तभाष्यादौ 'पश्यति त्वाचार्यः— पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति। ततो नेन्द्रस्येति निषेधं शास्ति' इत्युक्तम् ॥

एवमपि स्थलत्रये निर्वाहेऽपि। आदिना प्रस्ताय प्रस्तन्येत्यादिसंग्रहः। अन्तरङ्ग-त्वात् अनेकपदाश्रयसमासनिमित्तकल्यपपेक्षयैकपदीयप्रकृतिप्रत्ययापेक्षत्वेन घटकत्वेन तत्त्वात्। हित्वादिषु 'दधातेर्हिः' इत्यादिषु। आदिना 'द्यतिस्यति—' 'जनसन' इत्या-दिपरिग्रहः। स्यादिति। एवं चानिष्टरूपापत्तिरिति भावः। अपि. कैमुतिकन्यायेन

## अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यप् बाधते ॥ ५५ ॥

'अदो जग्धिः—' इति सूत्रे क्तीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमिति 'अदो जग्धिः—' इत्यत्र भाष्ये स्पष्टम् ॥ ५५ ॥

नन्वेवमपि इयायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह—

## वार्णादाङ्गं बलीयो भवति ॥ ५६ ॥

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः । 'अभ्यासस्यासवर्णे' इति इयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम् । तद्धि ईषतुरित्यादावियङादिव्यावृत्त्यर्थम्; एतत्परिभाषाभावे तु ईषतुरित्यादावन्तरङ्गेण सवर्णदीर्घेण

---

प्राग्वत्परादिसमुच्चयाय । **स्पष्टमिति** । ननु स्थानिवत्सूत्रेऽल्विधौ स्थानिवत्त्वाभावे ज्ञापकमिदमुक्तं भाष्य इति तयोर्मिथो विरोध इति चेत्' न; 'यावता विना यदनुपपन्नं तस्य सर्वस्य ज्ञाप्यत्वम्; न त्वेकेनैकमिति नियमः' इति कैयटेनैवोक्तत्वात् ॥ ५५ ॥

**एवमपि** ल्यब्विषये निर्दिष्टेऽपि । 'द्विर्वचनेऽचि' इति निषेधेन द्वित्वात्प्राङ्न वृद्धिरित्याह— **द्वित्व इति** । **अन्तरङ्गत्वात्** पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वात् । दीर्घत्वे 'वृद्धौ 'च इति शेषः । **तदसिद्धिः** इयायेत्यसिद्धिः, आयेत्यस्यैव प्राप्तेः । **तेनेति** । वचनाङ्गीकारेणेत्यर्थः । तद्व प्रतिपादयितुं तत्फलमाह— **तद्धीति** । यतोऽसवर्णग्रहणमित्यर्थः । आदिना ऊषतुरित्यादिपरिग्रहः । **इयङादीति** । 'क्त्वादिगुणाभावे सवर्णे अचि परत' इत्यादिः । आदिनोवङ्परिग्रहः । **भाषाभावे त्विति** । अत्राकारप्रश्लेषः । एवमग्रेऽपि । **बाधादिति** । अस्य 'इयङुवङोः', इत्यादिः । तथा च तयोरप्राप्तिरेवेत्यसवर्णग्रहणं व्यर्थं सत्तत्कार्यज्ञापकमिति भावः । ननु परनिमित्तकत्वस्य तुल्यत्वात्कथं तत्त्वमत आह— **इयङिति** । हि यतः । 'सवर्णे' 'असवर्णे' इति विशेषणयोरपि तुल्यत्वादाह— **अभ्यासेति** । संज्ञाकृतबहिरङ्गत्वानाश्रयणादाह— **संबन्धेति** । स्थानिना स्वनुवृत्त्या द्वयोरेव, नाभ्यासस्येति तत्संबन्धस्य निमित्तत्वं सुवचम्; तथा च तन्निमित्तसमुदायाद्-

चाधात्तद्वयर्थम् । इयङुवङो ह्यभ्याससम्बन्धनिमित्तत्वाद्बहिरङ्गौ । न चेयङादि-रपवाद, येन नाप्राप्तिन्यायेन इयर्तीत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्ग-यादिति भाव । परे तु— एतत्परिभाषाभावे 'अभ्यासस्य—' इति सूत्रमेव व्यर्थम् । न चेयेपेयायेत्यादौ चरितार्थम्, तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृ-द्धेश्च 'द्विर्वचनेऽचि' इति रूपातिदेशेनापहारे द्वित्वे कृते पुन प्राप्ते गुणवृद्धी बाधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्ते । न चेयर्तीत्यादौ तच्चरितार्थम्, तावन्मात्रप्र-योजनकत्वे 'उ' इत्येव ब्रूयात्; य्वोरिति वर्तते, 'इणो यण्' इति साहच-र्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम्; अनेरिवर्णस्येयङित्यर्थ । 'अभ्यासस्यतौ'

---

हिर्भूतनिमित्तकत्वेन सत्यपि तत्त्वमिति भाव । **अपवाद इति** । सवर्णदीर्घापवाद इत्यर्थ, प्रकृतलक्ष्ये तस्यात्रस्य प्राप्तेरिति भाव । सर्वविषयत्वावच्छेदेनोत्सर्गप्राप्तौ येन ल्यस्य विषय ; न चेह तथेत्याशयेनाह— **येनेति** । आदिना इयतुरित्यादिसंग्रह । **चस्यैव** 'इयङादे' इति शेष । प्राञ्च सीरदेवादय । अनेन सूचितामरुचिं प्रकटयन्, सिद्धान्तमतमाह— **परे त्वित्यादिना आहुरित्यन्तेन** । एतेनासवर्णपदमात्रव्यवच्छेद । तयोः इयपेयायेत्यनयो । अपि आदिमाभ्यासयोर्वास्त्वित्यादे समुच्चायक । **पूर्वेति** । 'द्वित्वात्-ात शेष, परत्वादिनेति भावः । **अपहारे** 'सति' इति शेष । **पुन प्राप्ते इति** । षाष्ठद्वित्वस्य द्विष्प्रयोगरूपत्वेनाविकारत्वेन लक्ष्यभेदादिति भाव । 'द्विर्वचनेऽचि' इत्यस्या-जादेशनिषेधकत्वपक्षे नत्वावयतया लक्ष्यानुरोधेन त्रित्वमेवाश्रयतमिति तत्त्वम् । अत्रान्तरङ्गत्व पूर्वोपस्थितनिमित्तकत्वरूपम् । **दीर्घापत्तेरिति** । एवं चाद्ये अच्परत्वाभावादेव तदप्राप्तेरिति भाव । द्वितीयादौ विशेषो वक्ष्यते । आदिना इयृत इत्यादिपरिग्रह । **तत् सूत्रम्** । एतेन 'अभ्यासस्य—' इति सम्पूर्णसूत्रव्यवच्छेद । नन्वसमासेऽस्यादावपि तदापत्तिरत आह— **य्वोरिति** । 'अचि श्नु—' इत्यत इति भाव । नन्वेवमपि ऋधातोरेव ग्रहणे किं मानम्? ऋकारान्तस्याङ्गस्येत्यर्थेऽधातोरपि ग्रहणसम्भवात् । तथा च पित्र्यकरोदित्यादौ च्व्यन्ते दोषापत्तिरत आह— **इण इति** । नन्वेतदपेक्षया अव्यवहितश्रिया इति साहचर्यात्तद्या-धातोरेवग्रहणं स्यात् । किं च व्यवहितसूत्रान्तरसाहचर्ये मानाभावश्चात आह— **व्याख्येति** । एतद्देशे स्वरितत्वं प्रतिज्ञाय 'अचि श्नु—' इत्यतो धातुपदानुवृत्तेरित्यर्थ । ननु तथा सत्यपि ऋकारान्तधातुमात्रग्रहणापत्ति, अतो व्याख्यानादेव लब्धं स्पष्टप्रति-पत्तये वाक्यार्थमाह— **अर्तेरिति** । विशेषणविशेष्यभावे कामचारेण धातोरित्यस्य विशेषणत्वम्, अत एव श्तिपा निर्देशेन तदभिव्यक्तता व्याख्याने तत्प्रवेश । इकार-

'अभ्यासस्यर्ते' इति वा गुरुत्वान्न युक्तम्। न च ए ऐ ओ औ शब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकम्; तथा ओणृधातोर्ण्वुलन्तादिच्छाक्यजन्तात्सनि उवोणकीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम्, पाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात् अन्त्ये द्वितीयाद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात्। एवं च संपूर्णसूत्रस्य ज्ञापकता युक्ता। यद्यपि भाष्ये 'यदयमभ्यासस्यासवर्णे इत्यसवर्णग्रहणं करोति' इति ग्रन्थेन असवर्ण-

---

स्यासभवात्त्याग, समासनिर्दिष्टत्वाद्विशेषानुवृत्तिरिति भाव। यैयट्टहरदत्तसीरदेवप्रकाशकर्तृकौस्तुभकृदायुक्तिं खण्डयति— **अभ्यासेति**। विनिगमनाविरहादाह— **अभ्यासेति**। यत्तु एवं पाठे श्तिपा निर्देशाद्यङ्लुकि न स्यादिति पूर्वोक्ता, तन्न, 'भवतेर' इतिवत्तत्सत्त्वात् 'श्तिपा शपा—' इत्यस्य भाष्येऽदर्शनाच्च, तद्दूषयनाह— **गुरुत्वादिति**। मात्रागौरवस्य पदद्वयकृतगौरवस्य च सत्त्वादिति भाव। ए ऐ इत्यादौ वि सन्धिस्वरूपबोधनाय सन्धिर्न कृत। हलादित्वाभावेन यङोऽप्राप्तेराचारक्विबन्तेभ्यः सनोऽनुपपत्तेश्चाह— **लिटीति**। तथा उक्तवत्। आदिना इयेजरीयिषतीत्यादिसंग्रह। अपिरुक्तसमुच्चायक.। क्वचित्तदपाठ एव। न च 'इजादे.—' इत्याम्परत्वाद्दोष इत्यार, इजादिरसगुरुमच्चयोरनिर्देशेनालाभात् यन्निमित्तविकल्पकृतोपदेशाप्रसाधर्मातिदेशो मृग्यते तन्निमित्तान्यनिमित्तकत्वस्य तत्राधिकारात्। न च धातुत्वमच्छत्यन्यत्वे स्त एव, तथा सति 'अनृच्छ' इति पर्युदासात् अज्झलात्मकसमुदायस्यैव तद्विधेयत्वीकारात्। न च 'धात्वप्रत्ययात्—' इति प्राप्ति., प्रत्ययग्रहणापनयनवादिमते तदसंभवात्। किं च तदपनयवादिना एकाज्भ्योऽनभिधानाद्विक्यनुपपत्तेरेव भाष्यस्वनादोषात्; अन्यथा सूत्रवार्तिकयो फलभेदापत्ते। अधिकमन्यत्र द्रष्टव्यम्। 'इको गुण—' 'वदव्रज—' 'ओत श्यनि' 'आदेच —' इत्यादिसूत्रस्थभाष्यप्रामाण्यादेजन्तेभ्य आचारक्विबभावाच्च। एतेन पर्युदासलभ्यार्थानङ्गीकारेण तेन तदापत्त्या प्रत्ययग्रहणसत्त्वमिति सिद्धान्तिमते तेन तदापत्त्या च दोष. इत्यार एवैत्यपास्तम्। तदेतत्सर्वं हृदि निधाय तदेवाह— **पाष्ठेति**। षष्ठाध्यायप्रथमपादप्रथमाह्निकचरमसूत्रव्याख्यानसाक्ष्यनित्यैतत्सूत्रस्योक्तज्ञापकप्रमाण्येत्यर्थं। अन्यथा तत्र चारितार्थ्ये ज्ञापकत्वासंगतिं स्पष्टैव। **तेषां** सध्यक्षरप्रकृतिकाचारक्विबन्तानाम्। अन्त्ये उवोणवीयिषतीत्यादौ। **द्वितीयेति**। 'अजादेर्द्वितीयस्य' इत्यादि; 'यथेष्टम्—' इत्यस्याधिकसमहार्थत्वेनाप्रप्राप्ते: नामशब्दस्य सुबन्तपरतया तत्प्रकृतिक एव इति प्राप्तेर्थेति भाव। **एवं च** अन्यत्राचारितार्थ्ये च। अत्र मते भाष्यविरोधमाशङ्क्य परिहरति— **यद्यपीत्यादिना स्यादित्यन्तेन**। भाष्ये 'दाश्वानिति सूत्रस्ये। अन्य ग्रन्थे अन्वय'। एतेन

ग्रहणस्यैव ज्ञापकता लभ्यते; तथापि 'न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवति' इति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते । अग्रेऽपि 'नैतदस्ति ज्ञापकम् । अर्थ्यमेनत्स्यात्' इत्यनेन सूत्रसार्थक्यमेव दर्शितम् । असवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात् । न चाकृतपरिभाषया इयेषेत्यादौ सवर्णदीर्घप्राप्तिः यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति संभावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं संपूर्णसूत्रस्य ज्ञापकतेति वाच्यम्, तस्या असत्त्वात् सत्त्वे वा एतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च । न च— अन्तरङ्गत्वाद्दीर्घेऽपि इयायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णलि असवर्णे इयङ्विधानेन सूत्रं चरितार्थम्; न च 'अचिश्नु—' इत्यनेन सिद्धिः, वृद्धिबाधनार्थत्वात्— इति वाच्यम्, प्रत्यासत्त्या असवर्णपदेन अभ्यासोत्तरखण्डसंबन्ध्यसवर्णाच एव ग्रहणात् शास्त्र-

---

सूत्रव्यवच्छेदः । तदुपेति । ज्ञापकोपेत्यर्थः । इत्थं हि तदाकूतम्— असवर्णाच्पराभ्यासवर्णादीनामियङादिविधान तथा सति व्यर्थमेव स्यात् । न चासवर्णग्रहणाकरणेनापीदं सिद्धम्, इयतुरित्यादावपि इयङाद्यापत्तेः । एवं चासवर्णग्रहणविशिष्टं सूत्रमेतदर्थज्ञापकम्; उपक्रमेऽपि बहुव्रीहिणा सूत्रमेवाभिमतमितीति भावः । तुरुक्तव्यवच्छेदे । 'तत्खण्डनावसरे' इति शेषः । तद्व्यावर्त्येति । असवर्णपदव्यावर्त्येत्यर्थः । उभयत्र कौस्तुभकृदायुक्तिं खण्डयति— न चेत्यादिना स्वीकाराच्चेत्यन्तेन । अकृतपरेति । अकृतेति परीत्यर्थः । आदिनेयायेत्यादिपरिग्रहः । ननु दीर्घे गुणाप्राप्त्या भाविनिमित्तविनाशाभावेन कथं तत्प्राप्तिरत आह— यदीति । गुण इत्युपलक्षणं वृद्धेरपि । सिद्धान्तरीत्या समाधत्ते— तस्या इति । अकृतेत्यस्या इत्यर्थः । कैयटादिरीत्या समाधत्ते— सत्त्वे वेति । वाशब्दोऽनास्थायाम्, न तु विकल्पे । एतद्भाष्येति । 'न ह्यन्तरेण' इत्यादिसर्वभाष्येत्यर्थः । द्वितीये तदुक्तिं खण्डयति— न चेति । अन्तरङ्गत्वात् पूर्वोपस्थितनिमित्तकत्वेन तत्त्वात् । दीर्घे सवर्णदीर्घे । इवर्णेति । अस्य 'स्वतः' इत्यादिः । णल्यसेति । णलूपे असवर्णेऽचीत्यर्थः । वृद्धीति । 'अचो ञ्णिति' इत्यनेनेति भावः । अत एवात्र शङ्कायां प्रागुपात्तस्येयेषेत्यस्य त्यागः, तत्र तदप्रसत्त्वाच्च । असवर्णपदेन असवर्णाच्पदेन । अभ्यासोत्तरेति । यणिरूपितपूर्वत्वमादायाभ्यासस्य तदवच्छिन्नोत्तरेत्यर्थः । ननु प्रत्यासत्तिन्यायाद्व्याप्तिन्यायस्य प्राबल्यमत आह— शास्त्रेति । शृतिविधीत्यर्थः । तथा हि सति

बाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैव औचित्याच्चेत्याहुः । सा चैव धर्मिग्राहकमानादङ्गवर्णयोः समानकार्यित्व एव । यत्तु— समाननिमित्तत्वरूपसमानाश्रयत्व एवेयमिति; तन्न, ज्ञापितेऽपि इयायेयेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च । स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः । न चैवमपीयायेत्यादावियङ् दुर्लभमत्र कर्तव्ये वृद्ध्यादेः स्था

---

इयायेत्यादिस्वल्पलक्ष्यसिद्धौ व्याप्तिन्यायविरोधः स्यादिति भावः । तदभ्युपगमाह— औचित्याचेति । ननु परिभाषाज्ञापनं केवलासवर्णदेनापि सिद्धमिति तच्छास्त्रबाधायभनास्वत आह— चेत्याहुरिति । यत्र 'हृदतिङ्' इति सूत्रस्यभाष्यात्तरीत्या 'अच परः—' इति स्थानिवत्त्वेन तदप्रवृत्तिरित्यस्य समुच्चयः । कदाचिन्मतमाह— सा चैवमिति । सपूर्वैतत्सूत्रज्ञापितोक्तपरिभाषेत्यर्थः । धर्मी परिभाषा तद्ग्राहकं मानमुक्तं सूत्रम् । समानेति । वर्णस्याङ्गकार्यिकार्यित्व इत्यर्थः । 'प्रवर्तत' इति शेषः । अत एव 'सार्वधातुकमपित्' इति सूत्रे ओपेरिति पर्युदासपक्षे च्यवन्त इत्यादौ गुणात्पूर्वं नित्यत्वादन्तरङ्गत्वाच्चेयादेशे कृते पिदपित्त्वे परत्वाद्पित आश्रितत्वादन्तरङ्गफललाभाय परस्य कार्ये प्रत्ययाद्विवक्षावशादिस्वेन ङित्त्वप्रवृत्त्या गुणनिषेधः स्यादित्युक्तम्, अन्यथा तु तदसंगतिः स्पष्टैवेति भावः । एतद्यच्छब्दं सौत्रदेशादिमतं खण्डयति— यत्त्विति । लक्ष्यं तु इयायेत्यादि कुम्भकार इत्यादि च बोध्यम् । एवैवोक्तव्यवच्छेदः । शेषं प्राग्वत् । प्रसिद्धेरिति । असमाननिमित्तकत्वेन परिभाषाया अप्रवृत्त्या दीर्घे आयत्राद्यापत्तेरिति भावः । इष्टापत्तिमभ्युपेत्याह— सूत्रेति । 'अभ्यासस्य—' इति सूत्रेत्यर्थः । एवं च स्वस्मिन् चारितार्थ्येन ज्ञापकत्वासंगतिरिति भावः । ऊसतुरुचे इत्याद्यसिद्धयापत्तिश्च, ह्रस्वस्य प्रत्ययाश्रयत्वेऽपि सवर्णदीर्घस्य तदनाश्रयत्वेन तदभावादेतदप्रवृत्तावन्तरङ्गत्वात्सवर्णदीर्घे ह्रस्वापत्तेः । सिद्धान्ते तु लक्ष्ये लक्षणमिति न्यायेन नेत्यपि बोध्यम् । केचिन्मतेऽत्रापि प्रमयमाह— स्योन इति । अत एव तु प्रयुक्तं । सिवेरौणादिके नप्रत्यये ऊठि यणि गुणे च रूपम् । वक्ष्यमाणेति । अत्र 'अनुपदम्' इत्यादि । अस्या वार्णादित्यस्याः । यणादेश इति । एतनाङ्गत्वाल्लघूपधगुणोऽत्र स्यादित्यपास्तम् । चैवमपि उक्तपरिभाषया आदौ वृद्धिगुणादिप्रवृत्तावपि । यत्तु सारस्वतादय— परत्वाद्गुण इति 'द्विर्वचनेऽचि' इति स्थानिव-

निवत्त्वेन 'असवर्णे' इति प्रतिषेधादिति वाच्यम्, सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः । तच्च सामान्यापेक्षम्— अभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति । अत एव आरतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य 'ढ्रलोपे—' इति दीर्घो दुर्लभ इत्यपास्तम् । अरियियादिष्वत्र स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् । इयं चाङ्गसंबन्धिन्याङ्ग एवेति 'स्वरितो वा—' इति सूत्रे भाष्ये;

---

स्थानिवत्त्वमित्यत्र मूलमिति; तन्न, रूपातिदेशस्यैव भाष्यसिद्धान्तत्वेन दोषतादवस्थ्यात् । यत्तु भाष्ये दास्थानित्यत्रैवमेवोक्तम्, तत्तु 'द्विर्वचनेऽचि' इति कार्यातिदेश एवाशयकमिति न दोषः; तद्ध्वनयन्नाह— सूत्रेति । 'अभ्यासस्य—' इति सूत्रेत्यर्थः । अधिकलक्ष्यसंग्रहायाह— तच्चेति । 'अभ्यासस्य—' इति सूत्र चेत्यर्थः । सामान्यापेक्षमिति । अस्य 'ज्ञापकम्' इति शेषः, तदाह— अभ्यासेति । अतिप्रसङ्गनिरासायाह— तत्कार्येति । वस्तुतोऽभ्याससम्बन्धिकार्यमात्रे वर्तते अभ्यासादुत्तरस्य द्वितीयभागस्य खण्डोऽवयवो य आदेशस्तस्य तत्कार्येत्यर्थः । 'दाधान्—' इति सूत्रद्वयोपात्तस्याप्ययमेवार्थः । 'तदनवयवधात्वनवयवादेशस्य—' इत्यादिशेखरस्य तु अत्र कार्येऽभ्यासस्यानवयवधातुसम्बन्धितादृशावयवसावः, अभ्यासानवयवरूधातोर्योऽयमवयव उत्तरखण्डसम्बन्धी अभ्यासाद्व्यवहितपराजरूपस्तस्य स्थाने य आदेशस्तस्याभ्यासकार्यप्रतिबन्धकीभूतस्थानिवत्त्व नेत्यर्थः । धातुत्वमुत्तरखण्डस्यैवेति ध्वनयितु तदनवयवेति तत्र बोध्यम् । अत एव यातिरित्यादिसिद्धिरिति भावप्रकाशे स्पष्टम् । अत एवेति । सामान्यापेक्षत्वादेवेत्यर्थः । आरतीति । यङ्लुगन्तम् । एवमग्रेऽपि । यणादेशस्य उत्तरखण्डादेशस्य । 'रुओ रो रि इति लोपे सति' इति शेषः । तत्कार्यप्रतिबन्धकीभूतेत्यस्य फलमाह— अरीति । तस्य तद्बाधकत्वादिति भावः । यदि त्वन्तरङ्गत्वेन रिङ्प्रागेवेयङ्, तदैतद्विशेषणं निष्फलमिति बोध्यम् । यत्तु न्यासकारादय— ध्यायोपीय प्रवर्तते, 'यज्ञयाच—' इति नङो ङित्करणाज्ज्ञापकात् । 'प्रश्ने चासन्न—' इति निर्देशेन सम्प्रसारणस्यानिष्टत्वेन विश्न इत्यत्र गुणनिषेधार्थे क्रियमाणं तद्धि तत्र ज्ञापकम् । अन्वयान्तरङ्गत्वात्तुकि गुणाप्रसङ्ग एवेति तद्वैयर्थ्यं स्पष्टमेव । अत एव च्यवन्ते प्रवन्ते इत्यादावनया एकादेशात्प्राग्गुण इत्याहुः; तन्मतमपि परिष्कर्तुमाह— इयं चेति । आङ्गे अङ्गसम्बन्धिन्येव कार्ये प्रवर्तत इत्यर्थः । भाष्य इति । अस्य 'स्पष्टम्' इति शेषः ।

तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः। इयं चानित्या, 'च्छ्वोः—' इति सतुक्कनिर्देशात्; अन्यथाङ्गत्वात्पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं

---

तदेवाह— तत्र हीति। 'स्वरितो वानुदात्त—' इति सूत्रभाष्ये हीत्यर्थः। आडुक्त इति। तदुत्तरम् 'उदात्तयणः—' इत्युदात्तेन सह संप्रधारणां कृत्वा परत्वादाडुक्त इत्यर्थः। 'एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्योऽयाद्यर्थम्' इत्यत्र, आट्— कुमार्या इदम्। 'उदात्तयणः—' इति कृते उदात्तानुदात्तयोरेकादेश उदात्तः। तस्य सिद्धत्वादाद्यादेश उदात्तः सिद्ध इत्युक्त्वा, उक्तप्रयोजनकल्पनायोभयोरनित्ययोः परत्वादाटि उदात्तैकादेशयोः परोऽडुदात्तत्वेऽपि अन्तरङ्गत्वादेकादेशः। वर्णाश्रयैकादेशः। विभक्तेरुदात्तत्वविधानात्परस्योदात्तत्वम्' इति हि तत्रोक्तम्। तत्र पूर्वं यणि सत्येव सम्भवति, नान्यथा। तत्राप्रवृत्तिकरणेन तत्रैवैतत्प्रवृत्तिरभिमता भगवत इति भावः। धर्मिग्राहकमानात्तथैव लभ्यत इति तदाकूतम्। वस्तुतस्तु उक्तसूत्रेण परिभाषामात्रं ज्ञाप्यते, न तु विशिष्य समानाश्रय एवेत्यपि। अत एव मध्ये डित्करणमपि सफलमिति न तस्यानर्थकयशङ्केति लाघवम्। इष्टानिष्टयोः प्रवृत्त्यप्रवृत्ती तु परिभाषानित्यत्वानित्यत्वाभ्यां बोध्ये। अनित्यत्वे च स्योन इत्याद्यर्थं केषाञ्चिन्मते न्यासकारादिमते चावश्यकमेवेति किं तथा कल्पनया। पूर्वम् 'सा चेयम्–' इत्युक्तिस्तु यैः समानाश्रय एवेत्यपि ज्ञाप्यमित्युच्यते, तेषामपि मध्ये क्षीरदेवाद्युक्तमयुक्तं केषाञ्चिन्मतं युक्तमिति सूचयितुम्; न तु सिद्धान्तं प्रतिपादयितुम्। अत्र मते 'अङ्गस्यान्निमित्याङ्ग एव' इत्यपि कल्पना नैरपेक्ष्यं लाघवमिति सिद्धान्तो बोध्यः; तद्ध्वनयन्नाह— इयं चानित्येति। स्पष्टार्थं। पूर्वमिति। छनिमित्ततुकः पूर्वमित्यर्थः। अप्राप्त्या निमित्ताभावात्। तद्वैयर्थ्यं सतुक्कनिर्देशवैयर्थ्यम्। एतेन तेन निर्देशेन समानाश्रय एव प्रवर्तत इति ज्ञाप्यत इत्यपास्तम्; स्योन इत्याद्यसिद्धेः ऊखतुरित्याद्यसिद्धेश्च 'अङ्गस्य' 'आदीनाम्' इत्यादिसूत्रस्थभाष्यादौ षाष्ठप्रथमाह्निकान्ते च इयायेत्यादीनां व्याश्रयसाधारणानां प्रयोजनानामुपन्यासाच्चेति दिक्। अन्तरङ्गपरिभाषापवाद इयम्। नन्वेवमपि अध्यैषातामित्याद्यसिद्धिः, लायस्यायामटीति पक्षे परेयङो निमित्तसंश्रयाभावेन ततः प्राक् पूर्वस्थितनिमित्तकत्वेनान्तरङ्गत्वाद्वृद्धापत्तेः उक्तपरिभाषयास्तयोर्युगपत्प्रवृत्त्या अप्राप्तेः तयोर्युगपत्प्रवृत्ताप्रप्रवृत्तिरिति कथञ्चिदाश्रयणेऽप्यनेकाच्त्वाद्यणापत्तेः; न चाटोऽसिद्धवत्त्वान्न यण्, अत्र पक्षे 'असिद्धवत्—' इति सूत्रस्य भाष्ये प्रत्याख्यानात्। [illegible] च 'एरनेकाचः—' इति योगं विभज्य 'इणो यण्' इत्यनुवर्त्य अडादिसहितानेकाचश्चेद्यण् तर्हीवर्णान्तेन इणेवेति नियमान्न दोष इति कौस्तुभाद्युक्तं युक्तमिति वाच्यम्, शब्दमर्यादया अलाभात् उक्तरीत्याडादिसहितानेकाजिणो यण एवाभावाच्चेति चेन्,

स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५६ ॥

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणेऽपि इटः श्रवणापत्तिरिति चेत्, अत्र केचित्—

## अकृतव्यूहाः पाणिनीयाः ॥ ५७ ॥

न कृतो व्यूहो विशिष्टो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। 'भाविनिमित्तविनाशे' इत्यध्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सं-

---

न; रूपस्यैवासत्त्वात्। तथा हि— भाष्येऽसिद्धवत्सूत्रप्रत्याख्यानेऽस्य योगविभागस्य शिध्यर्थत्वमाश्रित्यैतत्सामर्थ्यात् आयन्निरत्र पूर्वमाडित्युक्तम्। तस्मादीदृशे विषये पक्षयोः फलाभेदाय इङ्धातोर्लोकेऽनभिधानमेव। 'सम्प्रसारणाच्च' इति सूत्रोदाहृतमध्ययातामित्यादि तु छान्दसम्। तत्र हि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति बहुलग्रहणादादेशोत्तरं परत्वादियाडि तत आटि वृद्धिः। न चाग्निलः, इयङोऽपि तत्त्वात् अन्तरङ्गया वृद्ध्या बाधेऽपि लक्षणान्तरेण निमित्तविघाते निरवकाशत्वाङ्गीकारादिति बोध्यम्। केचित्तु— लावस्थायामडिति पक्षेऽपि वार्णादाङ्गमिति न्यायेनाङ्गस्य तन्निमित्तभूतादेशानां च पूर्वं प्रवृत्त्या न दोषः; यथाऽन्तरङ्गानपीति न्यायो लुकस्तत्प्रयोजकसमासादीनां च प्राबल्यबोधकः, तद्वदत्रापि अङ्गीकारात्। अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इत्याहुः। परे तु— 'असिद्धवत्' इति सूत्रारम्भस्यैव न्याय्यत्वेन तत्पक्षीयाभावेनादेशोत्तरमाडपेक्षया परत्वादियङि आटि वृद्ध्या रूपसिद्धिमाहुः। तदेतदभिप्रेत्याह— इत्यन्यत्रेति। शेखराशयस्त्वयम्. ॥ ५६ ॥

एवम् उक्तेनैवान्तरङ्गपरिभाषया अप्रवृत्तौ। आदिना पपुष इत्यादिपरिग्रहः। अन्तरङ्गत्वात् पूर्वोपस्थितनिमित्तकत्वात्। एवमग्रेऽपि। ततः विभक्त्युत्पत्त्यनन्तरम्। 'निमित्तसत्त्वात्' इति शेषः। यत्तु 'उस्यपदान्तात्' इति पररूपं भविष्यतीति; तन्न, 'अतो गुणे' इत्यतोऽस्त इत्यनुवृत्तेरत आह— अवर्णेति। केचित् सीरदेवदीक्षितादयः। ऊह इत्यस्य व्याख्या— निश्चय इति। वैशिष्ट्यमेवाह— शास्त्रेति। यैः पाणिनिप्रोक्ताध्येतृभिः। नन्वेवम् 'निमित्तं विनाशोन्मुखं दृष्ट्वा' इत्यस्य कुतो लाभोऽत आह— भावीति। इति सप्तमी। नन्वेवमपि तत्र संप्रसारणाद्यप्रवृत्तिरित्येवार्थः कुतो नेत्यत आह— बहिरङ्गेणेति। सम्भावनाया अपि निमित्तत्वस्य वक्ष्यमाणत्वादाह— संभावित इति।

भाविते अन्तरङ्गं नेति यावत् । अत्र च ज्ञापकम्— 'समर्थानां प्रथमाद्वा' इति सूत्रे समर्थानामिति । तद्धि सुत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्; अन्यथा अन्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव; तत्र हि भाविन्यादिवृद्ध्या सवर्णोच्चत्वविनाशः स्पष्ट एव । न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्या एकादेशे कृते आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्, तद्द्वारैव तन्निमित्तविनाशसत्त्वेनास्ततेः । न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम्, समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् । यत्तु— समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत

---

तत्रापीत्यर्थः । अत एव वक्ष्यति— 'विनाशाभावः' इत्यादि । अन्तरङ्गं नेतीति । तथा च तदपवादत्वादस्याः तयार्थो नेति भावः । यत्त्वत्र— 'गोरतद्धितलुकि' इति तद्धितग्रहणं ज्ञापकम् । तद्धि राजगवीयतीत्यादौ लुम्लुकि निषेधो माभूदित्येवमर्थं क्रियते । अस्या अभावे त्वन्तरङ्गत्वाट्टचा भाव्यमिति तदानर्थक्यमेव । ज्ञापिते तु भाविलुकः सत्त्वेयालुप्-पनिमित्तविनाशाट्टज स्यादिति तत्सफलमिति सीरदेवादयः; तन्न, 'अन्तरङ्गानपि—' इति न्यायप्राप्तानिष्टवारणेन साफल्यादिति केचित्; तद्ध्वनयन्नाह— अत्रचेति । उक्तपरिभाषायामित्यर्थः । तत्त्वमुपपादयति— तद्धीति । समर्थग्रहणं हीत्यर्थः । अन्यथा एतद्वचनाभावे । प्रत्ययेति । इत्रादीरयर्थः । तद्वैयर्थ्यंता समर्थपदव्यर्थता । ज्ञापिते चारितार्थ्यमाह— तत्र हीति । अस्या ज्ञापितत्वे हीत्यर्थः । सवर्णोच्चत्वविनाशः सवर्णाच्चनाशः । यथा चैतत्तया स्पष्टमन्यत्र । एवं च तत्रैतदप्रवृत्त्यर्थं समर्थग्रहणं कार्यमिति भावः । चारितार्थ्यं विघटयति— न चेति । अत्र सुत्थितादौ । वृद्ध्येति । अस्य 'निमित्ताभावात्' इत्यादिः । आदेशे दीर्घरूपे । 'इगुत्पत्तौ' इत्यादिः । तन्निमित्तेति । दीर्घनिमित्तभूतह्रस्वसवर्णाजित्यर्थः । तद्द्वारैवेति । आदेशविनाशद्वारैवेत्यर्थः । एतेन शास्त्रव्यवच्छेदः । तन्निमित्तेति पाठः; अर्थः प्राग्वत् । एवमग्रेऽपि । पुनरन्यथा तत्त्व विघटयति— न चेति । 'घटकत्वेन पूर्वस्थितत्वेन वा अन्तर्भूतनिमित्तकत्वेनान्तरङ्गाहृत-परिभाषाप्रवृत्तौ' इति शेषः; एवं चाचारितार्थ्येनाज्ञापकत्वात्समर्थग्रहणं व्यर्थमेवेति भाव । अत एवाह— समर्थेति । एतद्विषये अकृतेतिविषये । तस्याः अन्तरङ्गपरिभाषायाः । अपिरन्तरपरिभाषासमुच्चायकः; यावता विनेति न्यायेनेति भावः । नन्वेवं कृतमनया, तदनित्यत्वेन सेदुष इत्यादिसिद्धेरित्याशयेनाह— यत्त्विति । एतेनैतत्परिभाष्यवृत्तिः ।

इति; तन्न; असिद्धपरिभाषया समानकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य च अन्तरङ्गे कर्तव्ये असिद्धत्वं बोध्यते, न तु जाते अन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात्फलाभावाच्च; एवं च सुत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासंभवात्। 'अन्तरङ्गानपि विधीन्—' इत्यादेरप्यस्यामेवान्तर्भावः। एतत्प्रवृत्तौ च निमित्तविनाशसंभावनापि निमित्तम्।

---

तन्नेति। अत्र 'असंभवात्' इत्यन्तो हेतुः। बहिरङ्गस्य चेति। प्रागुक्तज्ञापकद्वयादिस्वरसादिति भावः। ननु प्रागुक्तऊठ्क्रिन्यायेन क्रमेणान्वाख्यानं पट्व्येत्यादावाश्रित्य पूर्वस्थितनिमित्तकत्वेनान्तरङ्गे तत्र कार्ये भाविबहिरङ्गस्यासिद्धत्वमपि परिभाषार्थ इति यथमेतदिति चेत्, न; चकारेण तस्यापि संग्राहात्। तद्ध्वनयन्नाह— न त्वितिति। अत्र कथने तात्पर्यम्, न तत्रेति भावः। तस्येति। बहिरङ्गस्यापीत्यर्थः, तत्त्वम् असिद्धत्वं पश्चात्प्रवृत्तिनिषेधरूपम्। कृते इत्यपि शेषपूरणेनायमर्थो लभ्यः; स च धर्मिग्राहकमानविरुद्धस्मात्प्रवृत्तिनिषेधरूपम्। ननु इत्याह— मानेति। नन्वेवमपि फलबलात्कल्प्यतेऽत आह— फलेति। अनन्यथासिद्धलक्ष्यसिद्धिरूपप्रसिद्धफलाभावादित्यर्थः। यद्यपि सुत्थितादावादौ निमित्ताभावादन्यकार्याप्राप्त्या दीर्घप्रवृत्तावपि परिभाषासचारे तेन तदनित्यत्वज्ञापनासंभवादित्येव हेतुः सुवच इति असिद्धेत्यादिभाषाविरचितमन्यानुपयोगः; तथापि यदि तथाप्यर्थः स्यात्तदान्तरप्रासङ्गिविनिवारणस्यैकादेशाश्रवणकसिद्धप्रयोगोऽपि तत्परिभाषाफलमिति तदनित्यत्वज्ञापन तेन सुकरमिति तदर्थाभावप्रतिपादनम्; तदाह— एवं चेति। तदर्थाभावे चेत्यर्थः। परेति। अन्तरङ्गपरेत्यर्थः। तदनित्येति। अन्तरङ्गपरिभाषानित्यत्वेत्यर्थ। 'समर्थग्रहणेन' इत्यादिः। नन्वेवमपि पट्व्येत्यादिवदनुपदोक्तरीत्या परिभाषासंचार एवाने तेन तदनित्यत्वज्ञापनं सुवचम्। अत एव 'अन्तरङ्गत्वात्' इति 'बहिरङ्ग—' इत्यादि च प्रागुक्तिः सङ्गच्छते। पूर्वमते तु तदुक्तगौणत्वं कल्प्यं स्यादिति चेत्, न; एकदेश्युक्तित्वेनादोषात् विप्रतिषेधसूत्रभाष्यविरोधापत्तेश्च। वक्ष्यते चेदम्; तदेतद्ध्वनयन्नेतद्ग्रन्थकारे 'अन्तरङ्गानपि—' इत्याद्युच्छेदापत्तिं निराचष्टे— अन्तरङ्गानपीति। आदिना प्रागुक्तसमासितपरिग्रहः। अपिः 'कृतमपि—' इत्यादिसमुच्चायकः। अस्याम् अकृतव्यूहपरिभाषायाम्। एवेनातिरिक्तत्वनिरासः। नन्वेवमपि सेदुष इत्यादौ साक्षान्निमित्तविनाशसत्त्वेनात्र तादृशनिमित्तविनाशग्रहणे मानाभावेन सुत्थितादौ तथा असत्त्वेनैतदप्रवृत्त्या अचारितार्थ्येनाज्ञापकत्वासमर्थग्रहणं व्यर्थमेवात आह— एतदिति। चेति। अस्य किं चेत्यर्थः, प्रयोजनं च। संभावना एककोटिकनिश्चयः। अपिः स्वरूपसद्विनाशसमुच्चायकः, समर्थग्रहणज्ञापक-

अत एव गोमद्दण्डीत्यादौ हल्ङ्याब्भ्यादिलोपो न; अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः। अस्ति च तत्रापि यदि लोपो न स्यात्, तर्हि लुक् स्यादिति संभावना। 'अल्लोपोऽनः' इति सूत्रस्थतपरकरणं तु परिभाषाऽनित्यत्वज्ञापनेन चरितार्थम्; तद्धि आन इत्यादौ लोपवारणाय; अन्यथा दीर्घाभावे लोपसंभावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः। 'समर्थानाम्—' इति सूत्रे कैयटस्तु— समर्थवचनेनेयं परिभाषा ज्ञाप्यते— अकृतव्यूहाः पाणिनीया इति। तेन पपुष इत्यादावन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन्, न कृतो व्यूहो विशिष्टस्तकों निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति। निमित्तापाये नैमित्तिकस्या-

---

पराकरप्रामाण्यात्तद्ग्रहणाच्च। तथा च यदि एकादेशो न स्यात्तर्हि शुभिः स्यादेवेति तत्संभावनास्तीति भावः। ननु तत्रोक्तप्रपादितरीत्योपपत्तिरत आह— **अत एवेति**। तत्संभावनाया अपि तन्निमित्तत्वाङ्गीकारादित्यर्थः। **गोमद्दण्डीति**। कर्मधारयः। आदिना भवद्दण्डीत्यादिपरिग्रहः। **अन्यथा** संभावनाया अनिमित्तत्वे। **अप्राप्त्या** निमित्ताभावात्' **तदुत्तरं चेति**। हल्ङ्यादिलोपोत्तरमित्यर्थः। **आपत्तेरिति**। तथा सति लुमादि स्यात्, अत एवापत्तिरिति भावः। 'अन्तरङ्गानपि—' इत्यादि तु नातिरिक्तमित्युक्तमेव। तथाऽङ्गीकारे त्वाह— **अस्तीति**। चस्त्वर्थे, संभावनापदोत्तरं योज्यः। क्वचित्तथैव पाठः। **तत्रापि** गोमद्दण्डीत्यादावपि। यदि लोपो न स्यादिति पाठः। एवं चात्र परंपरया निमित्तविनाशस्य न महणमिति तात्पर्यम्। नन्वेवमकृतेत्यङ्गीकारे 'अल्लोपोऽनः' इत्यत्र स्थतपरकरणं व्यर्थमत आह— **अल्लोपोऽन इतीति**। **परीति**। अकृतेति परिभाषार्थः। भाषानित्यत्वेऽत्यत्राकारप्रश्लेषः; तदेतदाह— **तद्धीति**। तपरकरणं हीत्यर्थः। **आन इति**। अनितेः क्विप्। अन्त्यं स्थानिवद्देशविकृतन्यायेनेति भावः। **अन्यथा** एतदनित्यत्वाभावे। **दीर्घेति**। यदि दीर्घो न स्यात्तर्हि लोपः स्यादिति संभावनयेत्यर्थः। **परिभाषाबलात्** तत्प्रवृत्तिबलात्। **इत्याहुरिति**। केचिदित्यनेनान्वयः। परिभाषायास्त्वर्थेऽप्यर्थभेदान्मतान्तरमाह— **समर्थेति**। अत एव तु प्रयुक्तः। 'कैयटः' इत्यस्याभिप्रैतीत्यत्रान्वयः। **तेन** परिभाषाज्ञापनेन। 'निवर्तते' इत्यत्रान्वेति। **अन्तरङ्गत्वादिति**। उक्तोऽर्थः। 'पार्वादागम्—' इति तु समानकालप्रसक्तिविषयमिति भावः। **वदन्निति**। कैयटविशेषणमेतत्। वैशिष्ट्यमाह— **निमित्तेति**। तत्फलितमाह— **निमित्तेति**। अत्र पक्षे समर्थ-

इति निर्देशादेषानित्या। तेन नातिप्रसङ्गः। स्पष्टा चेयम् 'कृन्मेजन्तः' इति सूत्रे भाष्ये। अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि—वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्—दाक्षिः। आत्वं पुग्विधेः—क्षापयति। पुग्ह्रस्वत्वस्य—अदीदपत्। त्यदाद्यकारष्टाब्विधेः—या सेति। इड्विधिराकारलोपस्य—पपिवान्। 'ह्रस्वनुड्भ्यां मतुप्' 'अन्तोदात्तादुत्तरपदात्' इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य—अग्निमान्, परमवाचा। नदीह्रस्वत्वं सम्बुद्धिलोपस्य—नदि कुमारीत्यादि। यादेशो दीर्घत्वस्य—कष्टाय। इतोऽन्यत्र प्रवृत्तिरेव, 'दोषाः खल्वपि साकल्येन परिगणिताः' इति भाष्योक्तेरित्यन्यत्र विस्तरः॥ ८७॥

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ 'द्विगोर्लुग्—' इत्यणो लुकि 'लुक् तद्धित—' इति स्त्रीप्रत्ययलुकि आनुकः श्रवणापत्तिरत आह—

---

मित्यन्तरङ्गायामिति युक्तमेवेति तया तस्या वारणेऽप्युपायस्योपायान्तरादूषकत्वेन न भाष्यासंगतिरिति बोध्यम्। अनित्यत्वात्तत्र तदप्रवृत्तिरिति भाष्याशय इत्यन्ये। ननु कष्टायेति निर्देशेन दीर्घ एवानित्यत्वं स्यादत आह— न येति। अत एव चप्रयोग। भाष्य इति। तत्र हि कुम्भकारेभ्य इत्यादावतिप्रसङ्गार्थं कृतस्य 'अनन्यप्रकृति' इति वार्तिकस्य खण्डनायेयमुक्ता। परिभाषाऽनित्यत्वयोर्व्यवस्थामाह— अस्या इति। नन्ववर्णाश्रय इति पाठे आत्रेयादीनामसंग्रहोऽत आह— वर्णाश्रय इति। विचालो लोप। अनिमित्तमिति। अस्याम सर्वत्र सम्बन्ध 'अनया स्यात्' इत्यस्य सर्वत्र शेष। दाक्षिरित्यादिलक्ष्यनिर्देश। या सेतीति। इतिराद्यर्थक। मतुब्विभक्त्युदेति। मतुब्विभक्त्योरुदात्तत्वे इत्यर्थ, जातावेकवचनम्, यथासंख्यमन्वय। ह्रस्वेति सूत्रे अन्तोदात्तादित्यस्यानुवृत्तिर्बोध्या। स्यादीति। आदिना गौर्यादिपरिग्रह। 'यादेशो दीर्घत्वस्य कष्टाय' इति पाठ। इत. नवम्य। यद्यपीदानीतनभाष्यपुस्तकेषु चरमवार्तिक न दृश्यते, तथापि तद्दृष्टमिति बोध्यम्। अत एव 'एते दोषा समा' इति भाष्यसंगति, तदाह— इत्यन्यत्रेति। उद्द्योतादावित्यर्थ॥ ८७॥

तत्प्रसङ्गादेवाह— नन्विति। इत्यादावपीति। आदिना पञ्चधीवेत्यादौ स्था

## संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥ ८८ ॥

अत्र च 'बिल्वकादिभ्यश्छस्य लुक्' इतिसूत्रस्थं छग्रहणं ज्ञापकम्; तद्धि छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम् । कृतकुगागमा नडाद्यन्तर्गता बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन । न चैवमपि छग्रहणं व्यर्थम्, कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः; अन्यथा 'बिल्वादिभ्यः' इत्येव वदेत्, लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम्, ततोऽपि

---

परिग्रह । तत्र पञ्चभिर्धावरीभि क्रीत इत्यर्थे आर्हीयस्य ठञ 'अध्यर्ध—' इति लुक् । **छमात्रेति ।** **संनीति ।** निर्धारणषष्ठी । **अन्यतरेति ।** 'ज्ञाप्यत प्राप्ते सति' इति शेष । मात्रशब्दोऽवधारणे । **इत्यर्थम्** इतिप्रयोजनकम् । एतदभावे बिल्वकादित परस्य छस्यैव न तु कुक इति छग्रहण विनापि तस्यैव लुगिति तद्वैयर्थ्यं स्पष्टमेव । नन्वकारोच्चारणात्स्वार्थकप्रत्ययान्तग्रहणात्तत्प्रकृतिकान्यप्रत्ययव्यावृत्त्या तस्य साफल्यात्कथ ज्ञापकता ? अत आह— **कृतेति ।** अत्र हेतुगर्भं विशेषणमाह— **नडाद्यन्तरिति ।** तत्र 'बिल्वकादिभ्य —' इति सूत्रे । 'आगन्तुनाकारेण' इति शेष । शीघ्रोपस्थिते, अन्यथा छग्रहणेऽपि कप्रत्ययान्तान्छस्यैवासम्भवेन सूत्र व्यर्थमेव स्यादिति भाव । अचारितार्थ्येन ज्ञापकत्व विघटयति— **न चैवमपीति ।** 'न च' इत्यस्य 'वाच्यम्' इत्यनान्वय । उक्तरीत्योक्तार्थे ज्ञापितेऽपीत्यर्थ । **अनुवादेति ।** निर्देशेत्यर्थ । **तदनीति ।** कुकोऽनिवृत्तीत्यर्थ । **अन्यथा** तदनुवादस्य तदनिवर्तकत्वाभावे । **इत्येवेति ।** तत परस्य प्रत्ययस्य लुगित्यर्थे उक्तन्यायेन कुकोऽपि निवृत्तिसिद्धि । तथा च छग्रहणस्य चारितार्थ्येन ज्ञापकत्वापत्तावपि तन्निर्देशवैयर्थ्यं दुरुद्धरमेवेति तत्सामर्थ्यात्तदनिवृत्तिसिध्या तद्वैयर्थ्यं सुस्थमेवेति भाव । ननु तथा दुर्वचम्, अनतिप्रसङ्गाय तन्निर्देशावश्यकत्वात् । तथाहि— तथा सति बिल्वेभ्य इत्यादावतिप्रसङ्ग । भस्येत्यधिकारेण निर्वाहे तु बिल्यायेत्यादौ ॥ । 'हलस्तद्धितस्य' इति तद्धितग्रहणानुवृत्त्या न सङ्गति तु न, तस्यावयवप्रत्ययान्तत्वात् अस्वरितत्वाच्च 'तस्येदम्' इत्यणो लुगापत्तेश्च । एतेन 'आपत्यस्य च—' इत्यतस्तद्धित इत्यस्यानुवृत्तिरपि निरस्ता, अत आह— **लक्षणेति ।** प्रतिपदोक्तत्वस्वरूपमाह— **बिल्वादीति ।** **पुरस्कारेण** विशिष्यानुसन्धानेन । एव च तत एवेष्टसिद्धया तन्निर्देशानर्थक्यापत्तिरेव । अतस्तत्सार्थक्याय तथोक्तौ ज्ञापितेऽपि तदचारितार्थ्यं सिद्धमित्यज्ञापकत्वमिति भाव ।

ञ्ञिरण्यस्याः प्रयोजनमिति नव्याः । ताच्छीलिक इत्युक्तेः 'तदन्तग्रहणम्' इति च खण्डयेव । 'कार्मः—' इति सूत्रे भाष्ये स्पष्टा ॥ ८९ ॥

ननु कंमपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत आह—

धातोःकार्यमुच्यमान तत्प्रत्यये भवति ॥ ९० ॥

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम' इति पाठस्तु प्रमृड्भिरित्यादौ 'अनुदात्तस्य चर्दुपधस्य—' इत्यमापादनेन भाष्ये दूषितः । यत्कार्यं प्रत्ययनिमित्तकम्, तत्रेयं

---

एतेन संधबोधितमिति शेखरेकागुक्तमपास्तम् । नव्या इति । दीक्षितादय इत्यर्थः । अत एव परिभाषायामुपक्रमभाष्ये च अण्कृतानीति बहुवचनप्रयोगमगमितिति तदाशय । अनेनाहनि सूचिता, तद्धीज तु— तत्रापत्यार्थकाण एव ग्रहणेन 'सामान्यातिदेशो—' इति न्यायेन तदनतिदेश । अत एवोपसंहारभाष्ये 'अणन्तादितीकार सिद्धो भवति' इत्येवोक्तमिति । तदन्ताग्रहणमिति । एवम् 'कुत्सने च च' 'चाफिञो' 'कुसिभ्यो ण' 'आम्रादिभ्यो च ' इत्यादावपि बोध्यम् ॥ ८९ ॥

प्रत्ययप्रसङ्गादेवाह— नन्विति । दुर्वेति । क्विबन्तानां धातुत्वात् मृजित्वात् भवाम प्रत्ययत्वाचेति भाव । इदमुपलक्षणम्— रज्जुसृड्भ्यां देवदग्भ्यामुदकमग्भ्या प्रगृभ्यां चार्मिमो देवगिरावित्यादौ अमनुमत्स्यसत्वाद्यापत्तिरपि बोध्या । धातोः सामान्यस्य विशेषस्य वा । तत्प्रत्यये तत्प्रकृतिकप्रत्यये । हत्ये तच्छब्दे । निपातनमिति । 'दाधिङ्गायनेति सूत्रे' इति शेष अन्यथा भाव ध्यानि 'नस्तद्धिते' इति टिलोप बाधित्वा परत्वात् 'हनस्त —' इति सिद्धे तद्वैयर्थ्यं स्पष्टमेव । उपधावृद्धयभावार्थं तु न निपातनम्, आदिवृद्धया बाधात् । नापि स्वरबोधनार्थम्, तस्येष्यमाणत्वात् । न च कुत्वाभावार्थं तत्, निपातनानामनेकप्रयोजनकत्वेन तावताप्यक्षत । यद्यपि तद्धिते परे तत्व न भवतीत्यस्येद ज्ञापकमिति तत्र सूत्रे भाष्य उक्तम्, तथाऽपि 'मृजेर्वृद्धि' इति सूत्रभाष्यैकवाक्यतया अयमेवार्थस्तेन ज्ञाप्यत इति शब्दान्तरेण तत्र तथा भाष्य उक्तमिति बोध्यम् । 'परिभाषामनपेक्ष्योक्तम्' इति कैयटस्य तु प्रमाद एवेति भाव । प्राचां मुक्ति खण्डयति— धातोरिति । स्वरूपेति । विशेषेत्यर्थ । पाठस्त्विति । वार्तिककृदुक्त इति भाव । प्रत्ययेति । धर्मिग्राहकमानलब्धमिदम् । किं च सप्तम्यन्तपदन

व्यवस्थापिका । तेन पदान्तत्वनिबन्धनम् 'नशेर्वा' इति कुत्वं प्रणड्भ्यामित्यादौ भवत्येव । इयङादिविधौ तु नैषा, 'न भूसुधियोः' इति निषेधेनानित्यत्वात् । 'मृजेर्वृद्धिः' इत्यत्र भाष्ये स्पष्टा ॥ ९० ॥

ननु सर्वके उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह—

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ९१ ॥**

'नेदमदसोरकोः' इति सूत्रे अकोरिति निषेधोऽस्या ज्ञापकः । 'तदेकदेशभूत तद्ग्रहणेन गृह्यते' इति 'येन विधिः—' इति सूत्रे भाष्ये पाठः ॥ ९१ ॥

---

यत्र प्रत्ययस्य निमित्तत्व तत्रैवानियमप्रसङ्गे नियमार्थैषा, धर्मिग्राहकमानात् । अत एव न 'अप्रशान्' इति निषेध सार्थक इत्यपि बोध्यम् । एव च प्रत्यये परतो यद्धातो कार्यमुच्यते, तद्धातुसशब्दनेन विहितप्रत्यये परतो बोध्यमिति परिभाषार्थ इति भाव । 'प्रणड्भ्याम्' इति पाठ । **भवत्येवेति** । पक्ष इति भाव । अत एव भाष्ये क्वचित्कुत्वसहित पाठो दृश्यत । **इयङादीति** । आदिना यण्परिग्रह । यत्तु— 'ओ सुपि' 'वर्षाभ्वश्च' इत्यारम्भादनित्येयमिति सीरदेवादय तन्न, तत्र सुपीति विशिष्योक्त्या अनियमाप्रसक्तेनैतदप्रसङ्गात असम्भवाच्च अत आह— **न भूसुधीति** । सुधीशब्दाश्रविषयकेणेति भाव । **अनित्यत्वात्** तत्त्वज्ञापनात् । **भाष्य इति** । तत्र हि कसपरि मृड्भ्यामित्यादौ वृद्ध्यभावाय कृत वार्तिक रज्जुसृड्भ्यामित्याद्यर्थमावश्यकैतापरिभाषया प्रत्याख्यातम् ॥ ९० ॥

प्रत्ययप्रसङ्गादेवाह— **नन्विति** । सज्ञाया साफल्यायाह— **सर्वक इति** । सज्ञयो पाठकमस्य बोध्यत्वादाह— **सर्वेति** । अत एव तथा स्पष्टनिर्देश । **न स्याताममिति** । विशिष्टस्यापाठादिति भाव । 'येन विधि —' 'यस्मात्प्रत्ययविधि —' इति सूत्रभाष्योक्तमाह— **नेदमिति** । **ज्ञापक इति** । अन्यथेदमदसोर्भिस ऐस उच्यमाननिषेधस्य शब्दान्तरत्वात्तत्राप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । ननु नाय पाठो युक्त , अव जादेस्तन्मध्यपतितत्वाभावात् मध्यपतितस्याप्यनवयवस्य यदद कस्यचित्तत्त्वापत्तेश्च 'येन विधि —' इत्यत्र भाष्ये पाठान्तरस्य स्पष्टत्वाच्च , अत आह— **तदेकेति** । **येन विधिरितीति** । इदमुपलक्षणम्— 'यस्मात्प्रत्यय—' इतिसूत्रस्यापि । यदि तु 'इदमदसो

ननु 'गातिस्थाघुपाभूभ्यः—' इति सिचो लुक् अपासीदित्यादौ पातेरपि स्यादत आह—

## लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९२ ॥

अस्याश्च ज्ञापकः— 'स्वरतिसूति—' इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देश इति कैयटः; तन्न, साहचर्याद्लुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात्। ध्वनिता चेयं परिभाषा 'यस्य विभाषा—' इत्यत्र भाष्ये। तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य

---

कात्' इति नियममङ्गीकृत्य अकोरिति प्रत्याख्यातम् 'नेदमदसो'—' इत्यत्र भाष्य इत्युच्यते, तदा 'एतत्तदो'—' इत्यत्र अकोरिति प्रतिषेधो ज्ञापको बोध्यः। उक्तसूत्रद्वयभाष्यं तु सूत्ररीत्येति बोध्यम् ॥ ९१ ॥

धातुप्रसङ्गादाह—**नन्विति**। **पातेरपीति**। ततः परस्यापि सिचो लुगित्यर्थः। अपिरिष्टपिबतिपरतरसमुच्चायकः। **अलुगिति**। 'सर्वं वाक्यम्—' इति न्यायेनालुग्विकरणस्यैवेत्यर्थः। क्वचित्तथैव पाठः। 'ज्ञापकः स्वर' इति पाठः। **सूङिलीति**। ङकारः पू प्रेरणे इत्यस्य वारणायेष्टसंग्रहाय च। अन्यथा निरनुबन्धकत्वात्तस्यैव ग्रहणं स्यात्। यत्तु—'ननु सूतीति श्तिपा निर्देश' क्वचित् श्तिपि पित्त्वाभावज्ञापनार्थः। तेन सूतीत्यत्र गुणनिषेधसिद्धिरिति चेत्तर्हि सूतिसूङित्येव ब्रूयात् तावताप्युक्तार्थसिद्धेः। एवं च सूयतीतिविकरणनिर्देशोऽत्र ज्ञापक इति सीरदेवादयः; तन्न, सौत्रत्वान्निपातनाद्वा सूतीतिप्रयोगसिद्धेरुक्तार्थज्ञापने फलाभावाद्वक्ष्यमाणदोषापत्तेश्च; तद्ध्वनयन्नाह—**पृथगिति**। **कैयट इति**। 'स्वरति—' इति सूत्र इति भावः। **साहचर्यात्** पूर्वपरसाहचर्यात्; अनित्यत्वेऽपीष्टस्थलेऽप्रवृत्तौ मानाभावात्। अत एव 'किमर्थं तयोः पृथग्ग्रहणं लुक्तेर्मा भूत्' इत्येव भाष्य उक्तम्। उक्त एव हि तस्याशयः। नन्वेवमप्रामाण्यापत्तिरस्यामत आह—**ध्वनिता चेयमिति**। चस्त्वर्थे। 'तत्र हि' इत्यस्य 'उक्तम्' इत्यत्रान्वयः। **विदित इति**। वेत्तेः रूपम्। दिवादितुदादिरुधादीनामनुदात्तत्वादेव निषेध इति भावः। **निषेधमिति**। 'यस्य विभाषा' इत्यनेन, 'विभाषा गम' इति श्रवणोत्तद्विकल्पविधानादिति भावः। 'वसुधाधेः' इत्यादि बहुव्रीहिः पञ्चम्यन्तं च। विशेषणमात्रमत्रोपाधिः, न स्वधर्मविशेष उपाधिरिति रक्षितः। तच्चार्थरूपम्। एवमग्रेऽपि। परसाहचर्यस्य बलवत्त्वे मानाभावेनैतदभावे उभयसाहचर्यादुभयोर्ग्रहणं स्यात्। एतादृशस्थले स्वनयोपेद्घलि-

अचङीति प्रतिषेधश्चास्या ज्ञापकः। इयं च कुत्वविषयैव। 'हेरचङि' इति सूत्रे भाष्ये स्पष्टेयम् ॥ ९३ ॥

ननु युष्मभ्यमित्यादौ 'भ्यसः—' इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोपे एत्वं स्यादत आह—

अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९४ ॥

अङ्गे अङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यम्, तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ प्रवृत्तौ अविधानं भवतीत्यर्थः। एषा च 'ज्यादादीयसः'

---

तेन तस्य ग्रहणम्। अपिना केवलस्येत्यर्थः। णिचो लोपेऽपि प्रवर्तये ण्यन्तेति विहाय ण्यधिकेरयुक्तम्। **ज्ञापक इति।** अन्यथोक्तरीत्या तत्राप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। एवमानुपूर्वीकैतत्परिभाषाया भाष्ये क्वाप्यपाठादन्यत्रानुपयोगाच्चाह— **इयं चेति।** **कुत्वेति।** 'हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्। ज्ञापकं त्वन्यत्र ण्यधिकस्यापि कुत्वविज्ञानार्थम्' इति भाष्यादुक्तरीति भावः। तदभ्यनयन्नाह— **हेरचेति।** एतेनानिखेयम 'न भा—' इतिसूत्रे 'ण्यन्तभादीनामुपसंख्यानम्' इति वार्तिकात्। तेन आङ्पूर्वाद्भ्रन्तेर्ण्यन्तात् 'आङो यम—' इत्यात्मनेपदम्, 'अर्दे —' इत्यत्र ण्यन्तस्या हृतेर्न ग्रहणमिति रक्षितसीरदेवाद्युक्तम् अभिप्रायमतीत्यादावनया णत्वसिद्धि। नभेतिसूत्र उपसंख्यानं च ॥ कर्तव्यं भवतीति पुरुषोत्तमदेवोक्तं चापास्तम्, अस्याः कुत्वमात्रविषयत्वात् ॥ ९३ ॥

प्रत्ययप्रसङ्गादाङ्गप्रसङ्गमाह— **नन्विति।** **लोप इति।** च कृत इत्यर्थः। **अङ्गवृत्त इति।** अयमेव भाष्यारूढः पाठः। एतेन अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य। अङ्गस्य कार्यस्य वृत्ते प्रवृत्ते ततो निष्ठितस्य पुनरङ्गकार्यस्य प्रवृत्तावविधानमपरिनिष्पत्ति। पुनरनुवृत्ताविति षष्ठ्यर्थे सप्तमी चेति श्रुतपालसीरदेवाद्युक्तम्, उभयत्र सप्तम्य तथा पाठ इति न्यासाद्युक्तं चापास्तम्। नन्वङ्गवृत्त इति कर्मधारये बहुव्रीहौ वा निष्ठान्तस्य पूर्वनिपातापत्तिरत आह— **अङ्ग इति।** अतिप्रसङ्गाय तदर्थमाह— **अङ्गेति।** व्यधिकरणचतुर्थ्यर्थबहुव्रीहिरियम्। तत्सम्बन्धस्य इत्यर्थः। यद्वा तथा सप्तम्यर्थबहुव्रीहिः अङ्गाधिकार इति यथाश्रुतम्। निष्पन्नं पठित आख्यातः। यद्वा सप्तमीतत्पुरुषः, **कार्यं** दात्वम्। इय सत्सप्तमी तदाह— **तस्मिन्सतीति।** तस्मिन् जाते सतीत्यर्थः। **पुन** पश्चात्। अनेन प्रत्यासत्तिः सूचिता, तां स्पष्टयन्नाह। ननु पुनस्तस्यैव प्रवृत्तेरसम्भवोऽत आह—

त्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यम् ‘ भ्यसोऽभ्यम् ’ इतिसूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥ ९४ ॥

यत्तु— ‘ औतोत् ’ इति वाच्ये ‘ ओर्गुणः ’ इति गुणग्रहणात्—

संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९५ ॥

इदं च विधेयकोटौ संज्ञापूर्वकत्व एव । तेन स्वायंभुवमित्यादिसिद्धम् ।

---

‘युष्मदस्मदोरनादेशे’ इतिसूत्रभाष्ये तागम्यते । अन्त्यलोप एवेति । अत एव ‘लिङ्गाभावाट्टिलोपवचनानर्थक्यम्’ इति ‘साम आकम्’ इत्यत्र भाष्य उक्तम् । शेषग्रहणं तु भाष्ये प्रत्याख्यातमेव । ‘त्यदादीनाम ’ इति सूत्रस्थम् ‘ टिलोपष्टाबभावार्थ ’ इति तु वार्तिकमेकदेशिवचनमिति न तद्विरोध इति भाव । लक्ष्यानुरोधाद्भाष्यानुरोधाच्च ‘इष्ठवत्’ इत्यभावातिदेशोऽपि लक्ष्यविशेष, तेन दरयतीत्यादौ न वृद्धि । प्रापयतीत्यादौ तु भवत्येव । तदाह— इत्यन्यत्रेति । उदयोतादावित्यर्थ । एव च अस्यास्तदसाधकत्वे च। च भाष्यं भाष्य च । एकदेश्युक्तिरिति । अवन्तत्वेनैव गुणप्रतिषेधवार्तिकप्रत्याख्यानसमर्थनाय प्रयत्नस्य गुरुत्वादिति भाव । अत्र केचिदित्यकचिन्तकम् तद्वाजं गुहलन्तत्वे वार्तिकप्रत्याख्यानस्य प्रकारान्तरेणासिद्धि । न चाकारोच्चारणाददन्ततामेव, ञिप्रादिवदकारोच्चारणात् । न च तथापि लक्ष्यासाधकत्वं समागतमेव, वार्तिकफलसाधकत्वेनैव तन्मात्रलक्ष्यसाधकत्वस्य लाभात् । इदमेव ध्वनयितुमुक्तसूत्रद्वये प्रयोजनप्रश्ने तदर्थत्वोक्तम्, न तु युष्मभ्यं दरयतीत्यादिनिर्दिष्टम्, तयामन्यथापि सिद्ध । अत एव ‘पाघ्रा—’ इतिसूत्रभाष्यगतानि । एतद्गतं तदप्यस्य उदाहरणमिति केचित् । तन्मपि न तथोक्तिस्वारस्यमिति तदर्थेति नार्थिकिरिति भाष्यतत्त्वविद इत्यर्थं तदित्यन्ये ॥ ९४ ॥

तथा 'नि लोट्' इत्येव सिद्धे आनिग्रहणात्—

आगमशास्त्रमनित्यम् ॥ ९६ ॥

तेन 'सागरं तर्तुकामस्य' इत्यादि सिद्धम् ॥ ९६ ॥

तथा तनादिपाठादेव सिद्धे 'तनादिकृञ्भ्यः' इति सूत्रे कृञ्ग्रहणात्—

गणकार्यमनित्यम् ॥ ९७ ॥

तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् ॥ ९७ ॥

तथा चक्षिङो ङित्करणात्—

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९८ ॥

तेन 'स्फायमिमोक' इत्यादि सिद्धम् ॥ ९८ ॥

तथा विनार्थनञा समासेन 'अनुदात्तं पदमनेकम्' इत्येव सिद्धे वर्जग्रहणात्—

नञ्घटितमनित्यम् ॥ ९९ ॥

---

आनिग्रहणात् आकारविशिष्टनिग्रहणात् आकारग्रहणादिति यावत् । यत्तु—'हलोऽनन्तरा—' इत्यत्राकृततनुमागमनिर्देशोऽत्र ज्ञापक इति पुरुषोत्तमदेव, तन्न, संज्ञात्वेन तस्योपपत्ते । सिद्धमिति । आदिना क्षुब्धो राजा, अपि शाक पचानस्येत्यादिसंग्रह । अग्रेण्युक्ती न ॥ ९६ ॥

कृञ्ग्रहणादिति । सीरदेवस्तु—घटादित्वादेव मित्वे सिद्धे पुन क्षमूष मित्वमत्र ज्ञापकम् । सामर्थ्यात् 'मितां ह्रस्व—' इति ह्रस्वार्थं तु न तत्, क्षमयतीति निर्देशादित्याह । इत्यादीति । आदिना क्षयामि किमत परमित्यादिसंग्रह ॥ ९७ ॥

ङिदिति । इत्थाने पुनर्थोऽङ्कार पाठ्य इति भाव । अनुदात्तेत्त्वेति । एवमपि शशामीत्यस्य कथमिदमिति चिन्त्यम् । सूत्रापक्ष वा ज्ञापकमस्तु । सीरदेवस्तु चक्षिङोऽनुबन्धद्वयमुभयत्र ज्ञापकमित्याह । इत्यादीति । आदिना उदयति विवदोर्मे यादि संग्रह ॥ ९८ ॥

तेन 'नेयङुवङ्—' इत्यस्यानित्यत्वात् हे सुभ्रु इति सिद्धमिति; तन्न, भाष्येऽदर्शनात् भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावात् भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् । किं च ज्ञापितेऽपि आनीत्यस्य न सार्थक्यम्, आडागमशून्यप्रयोगस्याप्रसिद्धेः । आड्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव 'घोर्लोपो लेटि वा' इति सूत्रे वेति प्रत्याख्यातम् । लोपेऽप्याट्पक्षे आटः श्रवणं भविष्यति दधादिति, । अटि दधदिति । आगमशास्त्रस्यानित्यत्वे त्वाट्यसति दधादित्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासंगतिः स्पष्टैव । एतेन यत्कैयटे केचिदित्यादिना अस्यैव वाग्रहणस्य

---

आदौ साधारणदोषमाह— **भाष्य इति** । ननु तत्रादर्शनं नाभावसाधकं तदधूतानां सूत्राणामभावापत्तेरत आह— **भाष्यानुक्तेति । ज्ञापितेति** । उक्तरीत्येति भावः । एवं च तत्र दोषलेशाभावेन वार्तिकाप्रवृत्त्या प्रामाण्येन भाष्याधृतानामपि तेषां सत्त्वेऽप्यत्र किंचिदंशे मतप्रवृत्त्या भाष्यधृतत्वेन सत्त्वेऽपि तत्र तदभावात् यथोत्तरं मुनीनां प्रामाण्येन तस्य तदनियामकत्वम् । अन्यथा द्वयोरज्ञानकल्पनापत्तिः । सा च न युक्ता, सर्वाज्ञाननिरासाय भगवतो प्रवृत्तेरिति भावः । नन्वेवं तथा सौत्राक्षराणामुक्तरीत्या वैयर्थ्यापत्तिरतस्तथैवावश्यं वाच्यमित्याशङ्कायामुक्तहेतोरेवाह— **भाष्येति** । एवं साधारणदोषमुक्त्वा, आद्ये गुणग्रहणस्य ज्ञापकत्वस्य खण्डितेति णकारस्यैवश्रुत्वेन ज्ञापितपरिभाषाप्रयुक्तानिष्टाभावेन तन्निरासेन चारितार्थ्यानपेक्षणेनाचारितार्थ्यरूपासाधारणदोषाभावाद्द्वितीयेऽसाधारणं तमाह— **किं चेति** । 'यतः' इति शेषः । यद्यप्यत्र ज्ञापितपरिभाषाप्रयुक्तानिष्टप्राप्त्या तन्निवारकतया साफल्यं सूत्रस्य, तथाप्यन्यथा तदाह— **आडागमेति** । **अप्रसिद्धेरिति** । तथा च ज्ञापकत्वमेव नेति भावः । नन्वेवमाड्ग्रहणवैयर्थ्यमत आह— **आडिति** । इत्संज्ञकटकारोपलक्षितमाग्रहणमित्यर्थः । आटो ग्रहणं ग्राहकं शब्दम् आकारम् इत्यर्थो वा । क्वचिदाग्रहणमित्येव पाठः । दृष्टान्तेनेदं सूचितम्— यथा तस्य कथमपि न व्यर्थत्वं लोटं विना आनिर्घटिततद्योग्यप्रयोगाभावात्, तथैतस्याप्यन्यथैवेति । 'घोर्लोपो लेटि वा' इति वाग्रहणमत्र ज्ञापकमिति न्यासायुक्तिमाडन ध्वनयन्नाह— **अत एवेति** । आगमशास्त्रमनित्यमित्यस्याभावादित्यर्थः । तत्प्रकारमाह— **लोपेऽप्याडिति** । 'लेटोऽडाटौ' इत्यनेन । 'बाधे रङ्—' इति न्यायेन कैयटविरोधं परिहरति— **एतेनेति** । य-

तदनित्यत्वज्ञापकतोक्ता, सापि चिन्त्या; प्रत्याख्यानपरभाष्यविरोधात् । तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च । चक्षिङो ङकारस्यान्तेदित्त्वाभावसंपादनेन चारितार्थ्याच्च ॥ ९९ ॥

एवमेव—

## आतिदेशिकमनित्यम् ॥ १०० ॥

## सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०१ ॥

इत्यादि भाष्यानुक्तं बोध्यम् । स्वायंभुवमित्यादि लोके अमाध्वेवेत्यन्यत्र विस्तरः ॥ १०१ ॥

---

दिति । सामान्ये नपुंसकम् । एतेनेत्यस्यार्थमाह— **प्रत्येति** । अत एव तेनापि केचि दित्यदचिसूचकमुक्तम्; तत्र त्यासादय इत्यर्थकम् । तृतीये तमाह— **तनादीति** । तुर्ये तमाह— **चक्षिङ इति** । **अन्तेदित्त्वेति** । अन्यथा नुम् स्यात् । तत्राकारः पाठ्य इति त्वेरोतसङ्ख्याधिकरणन्यायेन वक्तुमशक्यम् । किं चापाणिनीयत्वेनादृष्टहानिः स्यादिति भावः ॥ ९९ ॥

तथा तदुक्तातत्सदृशा अन्या अपि खण्डयति— **एवमेवेति** । अत्रादेवेत्यर्थः । **अनित्यमिति** । स्थानिवत्सूत्रेण सिद्धे 'प्रत्ययलोपे—' इति सूत्रमत्र ज्ञापकम् । **लोपविधिरिति** । अत एव वानि सन्तीत्यादौ यण' पूर्वमल्लोपः । उक्तसूत्रमेवात्रापि ज्ञापकम्, 'यावता विना—' इति न्यायात् । अन्यथा सर्वत्र प्राक्प्रत्ययनिमित्तककार्यं कृत्वा पश्चाल्लोपेनेष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति भाव । **इड्विधिश्चेति** । तेन श्वयित्वेत्यत्र संप्रसारणात्पूर्वमिट् 'न क्त्वा सेट्' इति कित्त्वनिषेधात्संप्रसारणाभाव । ज्ञापकं चात्र— सनि ग्रह—' इत्यत्रोकोऽनुकर्षणाय चकरणम्; अन्यथा रुरुपतीत्यादौ 'इको झल्' ति कित्त्वात् 'श्युक —' इति निषेधेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव । सत्यां त्वस्यामादावटि सामान्यसूत्रेणाझलादित्वात्तदप्राप्त्या तत्सार्थक्यं स्पष्टमेवेति भाव' । आदिना 'क्विप्रविशेषणाना वर्मत्वं क्वावचमकत्वं च' 'प्रतिपदविधानाद्योगविभागो गरीयान्' इत्यादिपरिग्रहः । **अनुक्तमिति** । निर्मूलं चेत्यपि बोध्यम्, 'प्रत्ययलोपे—' इत्यस्य नियामकत्वस्य भाष्ये सिद्धान्तितत्वात् आशीर्ष्यादौ त्रिवादेरन्तरङ्गत्वाल्लोपे इत्त्वाद्यर्थं तस्यो पक्षीणत्वाच्च अनुवृत्त्यर्थकचाना भाष्ये प्रत्याख्यानाच्च । न च 'श्वीदितो निष्ठायाम्' इति /श्रिमदणं ज्ञापकम्, अन्यथा आदौ संप्रसारणादौ 'श्युक —' इत्येव सिद्धे किं तेनेति

यदपि—ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह—

**प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०२ ॥**

पाष्ठद्वित्वस्य द्विष्प्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम् । अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति; तदपि न, भाष्येऽदर्शनात् । किं च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः । अत एव 'द्यतेर्दिगि—' इति सूत्रे 'अस्तेः परत्वाद्द्वित्वे कृते परस्यास्तेर्भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति' इत्याशङ्क्य, विषयसप्तम्याश्रयणेन परिहृतं भाष्ये । अन्यथा स्वकुत्करीत्यैकाज्द्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसंगतिः स्पष्टैव ।

---

वाच्यम्, श्युकः—' इत्यस्योपदेशाधिकारेणाप्राप्त्या श्वन इत्यादावन्तरङ्गत्वात्संप्रसारणे पूर्वत्वे चेण्निषेधार्थं तस्यावश्यकत्वात् । निष्फलं चेत्यपि बोध्यम् । नन्वेवं स्वायंभुवमित्यादीना का गतिरत आह—**स्वायमिति** । स्वयंभुव इदमित्याद्यर्थं इति भावः । आदिना प्रागुक्तसंग्रहः । **लोक इति** । अनेनार्षप्रयोगाणा साधुता सूचिता । एवमेव 'औपदेशिक—' इत्यादौ वक्ष्यमाणे 'क्रियाविशेषणानाम्—' इत्यादावुक्ते च भाष्यानुक्तत्वं निर्मूलत्वं निष्फलत्वं च बोध्यम् । तदाह— **इत्यन्यत्रेति** । उद्द्योतशेखरादावित्यर्थः ॥ १०० ॥ १०१ ॥

खण्डनीयत्वप्रसङ्गादेवाह— **यद्यपीति** । **न स्यादिति** । समुदायस्य लिङ्प्रकृतेर्हन्रूपत्वाभावात् । **गन्तस्यापीति** । अपिः केवलसमुच्चायकः । परिभाषार्थः प्राग्वत् । **पाष्ठद्वित्वेति** । बहुव्रीहिः । **द्विष्प्रयोगत्वेति** । द्विष्प्रयोगरूपत्वस्य सिद्धान्तेनेत्यर्थः । बोधने हेतुरयम् । **इदं** परिभाषारूपं वचनम् । **न्यायसिद्धमिति** । इदम् 'निष्ठा शीङ्—' इत्यत्र न्यासकृतोक्तं सीरदेवादिकैयटदीक्षितादिभिरनुसृतं च । एतस्य बीजस्यान्यत्राश्रयणमावश्यकमित्याह— **अत एवेति** । उक्तबीजाश्रीकारादेवेत्यर्थः । प्रागवस्पूर्वोरत्या बीजाभावेन निर्मूलत्वमाह— **किं चेति** । 'यतः' इति शेषः । **तत्त्वेति** । प्रकृतिरूपत्वेत्यर्थः । अत एव स्थानेद्विर्वचनाद्वेदसिद्धिरिति बोध्यम् । **मानाभाव इति** । भिन्नानुपूर्वीकत्वात्स्थानित्वस्य त्वत्र पक्षे प्राप्तिरेव नेति भावः । अत एवात्र प्रमाणमप्याह— **अत एवेति** । तेन तस्य तत्त्वबोधनस्य मानाभावेनासत्त्वादेवेत्यर्थः । **परत्वादिति** । अस्य 'भूभावात्' इत्यादिः । **विषयेति** । अस्य 'आर्धधातुके इति' इत्यादिः ।

तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या । 'भूसुवोः—' इति इत्यस्य तदन्ताङ्गस्येत्यर्थादपि प्रामाण्य गुणनिषेधस्य 'बोभूतु—' इति नियम इति न तद्विरोधः । तस्माद्धन्तेर्यङ्लुकि वा धादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥ १०२ ॥

यदपि— ननु 'वृद्धिर्यस्याचामादिः—' इत्यत्रेवपरिभाषोपस्थितौ

---

**अन्यथा** तत्र निर्वाहायोक्तधानकपरिभाषाया एवाङ्गीकारे । **त्वदुक्तेति** । तेन तत्र तत्त्व-बोधनरूपया तयैवेत्यर्थः । ननु केवलस्यापि तत्त्वसत्त्वात्कदाचित्तस्यापि स्यादिति तदावश्य-कत्वमेवात आह— **काशिति** । **दायस्येयेति** । एवेन केवलस्यावृत्ति । **आदेशा पत्तौ** आदेशभासौ । **तदसंगतिः** शङ्काया अज्ञानेन योजनेऽपि परिहारासंगति । नन्वेव जुहुधीति कथमत आह— **तस्मादिति** । उक्तभाष्यात्तदभावात्तेन तदङ्गी-रादित्यर्थ । भूवादीनां 'भूवादय —' इति धातुत्वस्यार्थवत्त्वस्य चोत्तरखण्ड एव त्वम् । अत एव वेवेद वेविदतुरित्यादौ 'विदो लटो वा' इति णलादिसिद्धि , 'सना-द्यन्ता —' इति धातुत्वस्य समुदाये सत्त्वेऽपि 'भूवा—' इति धातुत्वस्य तत्र सत्त्वादिति भाव । नन्वेवमभ्यस्तत्वस्य तत्राभावात्परिभाषाया अभावे अप्राप्तगुणाभावसाधकतया साकल्ये बोभूत्विति निपातनस्य बोध्यवेत्येव नियामकत्व भाष्योक्त विरुध्येतात आह— **भूसुवोरिति** । तत्प्रामाण्यादुत्तरखण्डस्य भूत्वादेरिवाङ्गत्वस्य समुदाय एवाङ्गीकारादिति भाव । यथा चैतत्तथा शेखरे स्पष्टम् । **धादपीति** । अपिनोक्तरीत्या अङ्गावयवयोर्भूसुवो-रित्यर्थपरिग्रह । पर तु 'सम्भवति सामानाधिकरण्ये—' इति न्यायेनाङ्गार्थ एव युक्त । सदा पूर्वपक्ष्यभिमतपरिभाषासमुच्चायक स बोध्य । अपिरहितपाठस्तु युक्त एव । 'गुण-निषेधस्य' इति पाठ । 'स्यागुणस्य' इति पाठ क्वचित् । अर्थ स एव । उपसंहरति— **तस्मादिति** । परिभाषाया अभावादित्यर्थ । अत एव 'ऊदुपधाया —' इत्युपधाग्रहणम् 'ओ सुपि' इत्यत ओरित्यनुवृत्त्या सिद्धे 'गमहनजन—' इत्युत्तरार्थमेव । एतेनात्र तज्ज्ञा-पकमिति वदन्त पुरुषोत्तमदेवसीरदेवादय परास्ता । यत्तु सीरदेवेन— उत्तरार्थत्वे ज्ञाप-कत्व कथमित्याशङ्क्य तत्रात इति स्थानी निर्देष्टव्य इत्युक्तम् तत्र, उत्तरार्थस्यापि 'इह किंचिदन्यपो' इति न्यायेन त्वन्मते तत्त्वसम्भवात् । **माधवादीति** । आदिना दीक्षितादय । जाग्रहितेत्यादौ तु दीर्घप्राप्तिरेव न, समुदायस्यैवाङ्गत्ववन् 'सनाद्यन्ता —' इति धातुत्व स्यापि अङ्गीकारात् । न हि तस्य प्रदित्वम् । एव चैवराजनुवृत्त्या न दीर्घ इति हरदत्तोक्त दीक्षिताद्युक्त च चिन्त्यमेव । एव च तत्रत्यमाधवोक्तिर्युक्तैव । तदाह— **इत्यन्यत्रेति** । शेखरादावित्यर्थः ॥ १०२ ॥

शालीयासिद्धिरत आह—

**विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०३ ॥**

अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठत इति तदर्थः । विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया सवन्धासंभवेऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम् । किं च 'उदीचामातः स्थाने—' इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्; अन्यथा 'षष्ठी स्थाने—' इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति; तन्न, 'उदात्तस्वरितयोर्यण.—' इत्यादौ 'ष्यङः सम्प्रसारणम्—' इतिसूत्रभाष्योक्तरीत्या 'अल्लोपोऽनः' इत्यादौ चैतस्या व्यभिचरितत्वात् भाष्यानुक्तत्वाच्च, स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य 'षष्ठी स्थाने' इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासंभवाच्च । तत्र स्थानेग्रहणं तु स्पष्टा-

---

तत्प्रसङ्गादेवाह— यद्यपीति । इकस्थानिकवृद्धिरिति तदर्थ इति भावः । 'नानुवादे' इत्युक्तेरन्यत्रात्या इष्टत्वाच्च विधिसूत्र इत्यर्थाभावेऽपि साक्षाद्विधेये परिभाषोपस्थितेरसंभवात् 'विधौ' इत्यस्य 'साक्षाद्विधेयविशेषण' इत्यर्थ इति सूचयितुं निषेधवाक्यार्थमाह— अनूद्येति । तदर्थ इति । एतद्घटकनिषेधवाक्यार्थ इत्यर्थः । अत एवात्र तथैव बीजमाह— विध्यङ्गेति । अङ्गत्वमुपकारकत्वम् । तद्विशेषणे विधेयविशेषणे । तद्वीति । विशेषणविशेषणेत्यर्थः । एतेन 'प्रधानाप्रधानयोः—' इतिन्यायलब्धोऽयमर्थ इति सीरदेवाद्युक्तमपास्तम्, तस्यान्यविषयत्वस्य वक्ष्यमाणत्वात् । अत एव ज्ञापकमप्याह— किं चेति । तद्धेति । तदपि नेत्यर्थः । इत्यादाविति । आदिना 'अचो रहाभ्याम्—' इत्यादिपरिग्रहः । भाष्यासम्मतिध्वननार्थं कोऽप्यन्तरमाह— ष्यङ इति रीत्येति । इदं च 'अनन्त्यविकारे—' इति परिभाषाव्याख्याने स्फुटीभविष्यति । 'चैतस्या' इति पाठः । ननु 'शब्दाव्ययादे' इत्यादिप्रकरणादनित्येयमिति सीरदेवाद्युक्तरीत्या दोषोऽस्त आह— भाष्येति । नन्वयमपि दोषो न युक्त इति प्रागुक्तमत आह— स्थानेति । स्थानशब्दार्थनिरूपितसम्बन्ध इत्यर्थः । परेति । 'षष्ठी स्थाने—' इतीत्यर्थः । किं त्वन्तरङ्गत्वलभ्य । तथा सत्यन्यार्थज्ञापकत्वसंभवेऽपि नोक्तार्थज्ञापनसंभव इति भावः । ननु तत्र स्थानपदानर्थक्यमत आह— तत्रेति । 'उदीचा

ध्वनितम्, कैयटेन स्पष्टमुक्तम्। एतेन क्रियान्वयित्वं कारकत्वमित्यपास्तम्, 'यस्य च भावेन—' इति सप्तम्या अपि क्रियान्वयित्वात्। ये तु—प्रधानीभूतक्रियासम्बन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति, तेषामुभयोरपि क्रियासम्बन्धनिमित्तकत्वेन तदसंगतिः स्पष्टैव। 'नमोवरिवः—' इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्य उपन्यासस्यासंगतिश्च। एतेन 'क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गा। उपपदार्थेन तु यत्किंचित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता बहिरङ्गा' इत्यपास्तम्, नमस्यतीत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात्। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव। 'सह-

---

अस्य 'ध्वनितम्' 'उक्तम्' इत्युभयत्रान्वयः। दीयत इति। तत्र हि कार्यमित्यस्यैव दीयत इत्यर्थस्यापि वैयर्थ्यशङ्कापरत्वे, मास इति न भावलक्षणसप्तमी, किं त्वौपश्लेषिके ऽधिकरण इत्युक्तम्। ध्वनितमिति। अस्य 'सगच्छते' इति शेषः। उक्तमिति। अस्य 'च' इति शेषः। तेन तस्य तत्रान्वयः। अन्यथा अन्तरङ्गत्वस्य प्रधानत्वस्य च द्वयोः समत्वेन तन्न्याययोरविषयत्वेनैतत्प्रवृत्त्यभावात्तदसंगतिः स्पष्टैव। दीक्षितोक्तिं खण्डयति— एतेनेति। तस्यार्थमाह— यस्य चेति। तथा चोभयोरपि कारकविभक्तित्वादुक्तभाष्यासंगतिरेवेति भावः। प्रधानन्यायमूलकत्वमिति सीरदेवाद्युक्तिं खण्डयति— ये त्विति। सीरदेवादय इत्यर्थः। तेषामिति। अस्मिन्नपि पक्षे। तेषामपीत्यर्थः। उभयोरिति। सत्सप्तम्यधिकरणसप्तम्योरित्यर्थः। क्रियेति। अस्य 'प्रधानीभूत' इत्यादिः। तदिति। 'तत्र च—' इति मूलभाष्यासंगतिरित्यर्थः। दोषान्तरमाह— नम इति। असंगतिश्चेति। नम पदार्थे देवस्य क्रियाकारकभावेनैवान्वयेन तुल्यत्वादिति भावः। एतेन यत्रैकस्या एवोपपदविभक्तित्वं कारकविभक्तित्वं च, तत्रैवास्याः प्रवृत्तिः, तेन ज्योतिष्टोमेनेत्यादौ करणे तृतीया, न त्वभेद इति शास्त्रोक्तमपास्तम्, उक्तभाष्यासंगत्यापत्तेः। कैयटसीरदेवाद्युक्तिं खण्डयति— एतेनेति। अन्तरङ्ग इति। तद्विना पदार्थान्तरानन्वयात्। तन्निमित्तेति। बहुव्रीहिः। यत्किंचिदिति। सर्वत्र सम्बन्धस्य किंचित्क्रियाकारकभावमूलकत्वात्, यथा—स्वत्वं क्रयादिनिबन्धनमिति भावः। एतत्स्यार्थमाह—नमस्येति। 'देवाद' इति शेषः। तथा चोक्तभाष्यासंगत्यापत्तिरिति भावः। ननु नम पदस्य नामत्वेन कथं तदर्थस्य क्रियात्वमत आह— अत्र चेति

युते— 'इत्यादौ च प्रधाने प्रथमासाधनार्थमिदं भाष्यं इत्यन्यत्रेत्यन्यत्र विस्तरः ॥ १०४ ॥

नन्वत्रमुपड्डित्यादौ पूर्वस्यापि गुणापत्तिरत आह—

अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०५ ॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः, अन्यथा धात्वादेर्नत्वसत्वे नेता सोतेत्यादावेन स्याताम्, न तु नमति सिञ्चतीत्यादौ। अनन्त्यविकार इति च लिङ्गम्। अन्त्येन समानो देशो यस्य,

---

नमस्यतीत्यनेनेत्यर्थः। विशिष्यानुतानियामकस्य जादिसमभिव्याहारादिति भावः। अत एवाह— गुणेति। तत्र दोषान्तरं ध्वनयन्नाह— सहयुक्त इति। अत एव भग-वति पुनरेतत्खण्डनतात्पर्यं च। तथा चास्याः अन्तरङ्गन्यायमूलकत्वे प्रथमापवादत्वे तृतीयायाः सर्वत्र तदापत्तिः, अन्यथा सर्वत्र प्रथमापत्तिः। न चैवं द्वितीयपक्षे सूत्राणा वैयर्थ्यम्, न्यायानुगतेऽर्थे हि किं कुर्मः। तत आचार्य एवास्तु। एवं च सर्वथा अप्रधा नग्रहणावश्यकं वऽनया तासाधनपरभाष्यासंगतिरेव। तस्माद्वचनमेवेदम्, लाघवात्। न चैवम् 'नमश्चकार देवेभ्यः' 'रावणाय नमस्कुर्याः' इति शब्दयोरसंगतिः, अनुकूल-भिन्नभिन्नार्थेन निर्वाहात्। 'नम स्वस्ति—' इति चतुर्थीति जयमङ्गलोक्तिस्तु चिन्त्यैव, उक्तहेतोः। तदाह— इत्यन्यत्रेति। उद्योतादावित्यर्थः ॥ १०४ ॥

बाधनिरस्तत्वसाम्येनोपस्थितेराह— नन्वदेति। पूर्वस्य दस्य। अत्यासत्ति-भा-वेनाह— अन्त्येति। युगपदिति। 'कार्यस्य' इति शेषः। 'सर्वं वाक्यं सावधा-रणम्' इति न्यायेन— एवेति। तदर्थ वचनघटकान्त्यपदेशस्येत्यस्यार्थ, तस्य विधि-निषेधयोरेकप्रयोगस्पविषयत्वाश्रयणमिति भावः। अन्यथा उक्तार्थानङ्गीकारे। धात्वा-देरिति। अस्य 'विधीयमाने' इति शेषः। आदिना खदादिसंबन्धिसत्वविध्यादि स इत्यादावेव स्यात्, न तु स्थ इत्यादावित्यस्य परिग्रहः। एतेनैतद्धर्मस्या अनित्यत्व-मिति भ्रान्तोक्तम्, एतद्दोषेणैव अन्यान्यथावेति संदेहावद्युक्त चापास्तम्। नन्वेव समन्य न्त व्यर्थमत आह— अनन्त्येति। परिभाषाया लिङ्गत्वनियमात्। तथा च यत्रानन्त्य विकार, तत्र अन्त्यसदेशस्येत्युपतिष्ठत इति परिभाषार्थ इति भावः। एतेन 'अनन्त्य विकार' इति सौत्रदेवाद्यान्तप्रथमान्तपाठ, अनन्त्यस्य यो विकार सोऽन्त्यसमी पवर्तिनो न यस्य कस्यचिदित्यर्थक प्रत्युक्त, भाष्यविरोधाच्च। ननु सादेशश्रवण बलात्साहित्यप्रतीतेरव्ययीभावे बहुव्रीहौ वार्थासमाप्तिरनन्वयापत्तिश्चान्त्येन सहेति दोषः

न्येतस्याः प्रयोजनानि ' इति पाठोऽपि क्वचिद्दृश्यते । वाचनिक्येवैषा, स्पष्टा च 'प्यङ्ः—' इति सूत्रे, 'अदसोऽसेः—' इति सूत्रे च 'केचिदन्त्यसदेशस्य' इत्यनेन भाष्य इत्यन्यत्र विस्तरः ॥ १०५ ॥

ननु 'अव्यक्तानुकरणस्यातः' इति पररूपं पटदिति पटितीत्यादौ 'अलोऽन्त्यस्य' इत्यन्त्यस्य प्राप्नोतीत्यत आह—

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०६ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ 'भृञामित्' इत्यादि अन्त्यस्यैव । अभ्यासोऽनर्थकः, अर्थावृत्त्यभावात्, किं तूत्तरखण्ड एवार्थवानित्यन्यत्र निरू-

---

एवमर्थकरणे मानं सूचयन्नाह— नैतान्येवेति । अत एव नैषास्ति परिभाषेति नोक्तम् । निक्येवेति । एव प्रामवत् । अदमुयङ्क्षितसिद्ध्यर्थमस्या आवश्यकत्वमपि भाष्योक्तमिति सूचयन्, प्रागुक्तं फलद्वयं पृथगाह— अदसोऽसेरितीति । एवमानुपूर्व्यास्तत्रापाठादाह— केचिदिति । चिन्त्यत क्विप्यसो लोपे णिलोपादौ प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे यण् प्रतिषेधादित संयोगान्तलोपाभावे 'पूर्वत्रासिद्धे न—' इति निषेधात्स्थानिवत्त्वाभावे प्रत्ययलक्षणेन पदान्तत्वाद्विन् (पाग—अविमरित्यत्र) इत्यत्रान्त्यमदेशस्येत्वे दीर्घवारणाय 'र्वो—' इत्यत्रोपधाग्रहणम् । एव प्रचक्रासत्त्वादचुकुत्सा आधारस्य वृद्धिवारणायोपधाग्रहणम् 'अत उपधायाः' इत्यत्र । एतेनोपधाद्वयग्रहणादनित्येयमिति प्रागुक्तम्, 'अत उपधायाः' इत्यत्रोपधाग्रहणं चिन्त्यमिति शेखरदेवाद्युक्तं चापास्तम् । तदाह— अन्यत्रेति । भाष्यादाविस्तरः ॥ १०५ ॥

प्रतियोगित्वेनोपस्थितालोन्त्यपरिभाषाप्रसङ्गादाह— नन्वव्यक्तेति । पटदिति । पटितीत्यादिसिद्ध्यर्थं पटदितीत्यादावित्यर्थः । तथा च पटेतीत्यादि स्यात्, पटितीत्यादि न स्यात् । एतदर्थमेव तदुपादानम् । नानेति । अभ्यासविकारविषयभिन्नानर्थके स नेत्यर्थः । 'दौ भृञामिदित्यादि' इति पाठः । आदिभ्याम् अनीगणदित्यादौ 'ई च गणः' इत्यादिसंग्रहः । नन्वनभ्यासेति व्यर्थम् अभ्यासस्यार्थवत्त्वेन निषेधस्यैवाप्राप्तेरित आह— अभ्यास इति । इत्यभावादिति । शब्दद्वयश्रवणवत्तोऽर्थद्वयाप्रतीतेरिति भावः । समुदायस्यैवार्थवत्त्वमिति प्राचीनमतनिरासायाह— किं त्विति । एवस्तद्व्यावृत्तये । अय

पितम् । एषा अलोन्त्यात्सूत्रे भाष्ये स्पष्टा, फलानामन्यथासिद्धिश्चानेन प्रत्याख्याता चेति तत एवावधार्यताम् ॥ १०६ ॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ 'पुमान् स्त्रिया' इत्येकशेषापत्तिः, स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह—

प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ॥ १०७ ॥

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः । स्पष्टा चेयम् 'पुमान् स्त्रिया' 'नपुंसकमनपुंसकेन—'

---

भाव — केवलाभ्यासस्याप्रयोगेण ततो लोकेऽर्थावबोधाभावस्य तत्त्वम् । उत्तरखण्डस्य तु प्रत्ययाव्यवहितप्राग्वर्तिनः केवलस्याप्यन्यनार्थबोधकतायाः दृष्टत्वेनार्थवत्त्वमेव, पेचतुरित्यादौ तदभावेऽप्यर्थबोधात् । अभ्यासप्रयोगस्तु रेरीय पुप्यतीतिवत्साधुत्वार्थं एव । यातीरित्यादौ तु 'शिष्यमाणं लुप्यमानार्थाभिधायि' इति न्यायेन 'एकदेश—' इतिन्यायेन 'सर्वे सर्वपद—' इति न्यायेन चोत्तरखण्डाभावाच्छिष्यमाणस्यैवार्थबोधकत्वम् । नहि लोपादिविषये तस्य तत्र दृष्टम् । इह केवलस्यानर्थकस्य समुदायस्यार्थवत्त्वमिति वदतोऽप्यापत्यपगम् । अत एव प्रागुक्तदयतेरितिसूत्रस्थभाष्यसङ्गतिरिति । तदाह— अन्यत्रेति । शेखरादावित्यर्थः । अलोन्त्यादिति । उपधासंज्ञासूत्र इत्यर्थः । अन्यथेति । 'नाम्रेडितस्यान्त्यस्य तु वा' इति ज्ञापकात्पटितीत्यादिसिद्धिः । अनादेशे कृते 'हलि लोपः' इति नलोपादाभ्यामित्यादिसिद्धिः । द्विशकारकनिर्देशेन 'घ्वसोः—' इति लोपः सर्वादेशः । अनग्रहणात् 'अन्न लोपः—' इति लोपः सर्वादेशः । अत एव 'तस्य लोपः' इत्यत्र तस्यग्रहणं सार्थकं सर्वादेशत्वार्थमित्यादिप्रसरेणेत्यर्थः । इग्वाचनिनीति केचित् । 'इदमो मः' 'इदश्च' 'य सौ' 'अयुपुंसि' इत्येव सिद्धे दग्रहणम् आचारज्ञापकम्, 'अतिपिपर्त्योः' इति निर्देशः अनभ्यासेऽयज्ञापक इत्यपरे ॥ १०६ ॥

अनभ्यासेत्युक्त योत्तरखण्डस्यार्थवत्त्वेन स्मृतप्राधान्यप्रसङ्गादाह— नन्विति । 'ननु ब्राह्मण' इति पाठः । त्यादाविति । आदिना क्षत्रियवत्सा च क्षत्रियावत्सश्चेत्यादिपरिग्रहः । प्रधान इति । निरूपितत्व सप्तम्यर्थः, तन्मात्रनिरूपितकार्यस्यार्थः । तेन उक्तपरिभाषाङ्गीकारेण । प्रताप्रधानेति । ब्राह्मणनिष्ठेत्यर्थः । अपिना तत्कृततत्समुच्चयः । न दोष नैकशेषापत्तिरित्यर्थः । यत्तु सीरदेवाद्य — 'आ घड्डारादित्यत्र कडारा कर्म

इत्यनयोर्भाष्ये । अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति 'हेतुमति च' इत्यत्र भाष्यकैयटयोः ॥ १०७ ॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यादत आह—

## अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०८ ॥

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणम्, न परिच्छेत्तृवाचकस्य । योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव

---

धारय इत्यनत्यः कडारशब्दोऽवधि., न तु प्राक्कडारादित्यनस्य इत्यस्या' फलम् । आद्ये पूर्वस्यविशिष्टाना तेषां विधानेन प्राधान्यम्, अन्त्ये वैपरीत्येन तत्त्वाभाव:' इति; तन्न, द्वयोरप्यधिकारत्वेन 'गुणानाम्—' इति न्यायेनासंबन्धात् । लौकिकोऽयं न्याय. । तत्र हि जयपराजयौ राज्ञ्येव प्रतीयेते । बहुषु गच्छत्सु, को यातीति प्रश्ने राजेत्युत्तरं च । स्पष्टा चेयमिति । आद्येऽनयोरुभयोरुपस्थल एकशेषो वारितः । अन्त्येऽनया क्लीबदोषमङ्गीकृत्य तत्सूत्रं प्रत्याख्यातम् । अनिर्ज्ञातेऽर्थे गुणसंदेहे विद्गेऽव्यक्तरूपे च लोके नपुंसकलिङ्गस्यैव प्रयोगात्तस्य प्रधानत्वम् । 'केनेत्यनयो.' इति पाठ । 'नेत्यादौ' इति पाठान्तरम् । आदिसंग्राह्यमेव प्रकटयन्, परिभाषाया विषयान्तरमप्याह— अन्तरङ्गेति । अन्तरङ्गादुपजीव्याच्चेत्यर्थ' । परादितोऽन्यस्मात्प्रबलमिति किमु वक्तव्यमित्यपिना सूचितम् । कैयटयोरिति । तत्र हि हेतुमतीत्यस्य प्रकृत्यर्थविशेषणत्वं संदूष्य स्वीकृते प्रत्ययार्थविशेषणत्वे पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यादौ प्रयोज्यकर्तरि स्वव्यापारापेक्षया स्वातन्त्र्येण परत्वादन्तरङ्गत्वादुपजीव्यत्वाच्च प्राप्तकर्तृत्वमनादृत्य दत्तकर्मत्वापत्तिदोषः 'गतिबुद्धि—' इति नियमेन वारितः । लोके तथा दर्शनं हि तद्बीजम् । अन्यथा तदसंगतिः स्पष्टैवेति भावः । एतेन मनोरमादिकं चिन्त्यमेवेति सूचितम् ॥ १०७ ॥

प्राधान्येन प्राबल्यप्रसङ्गादाह— नन्विति । शब्दस्येति । अवधे. संबन्धित्वेन विवक्षायां षष्ठी । एवमग्रेऽधिकरणत्वेन तस्यां सप्तमी । परीति । परिच्छेत्ता धान्यमाता । स्यादिति । व्याप्तिन्यायात्, तस्य यौगिकत्वेन स्वस्रादिविशेष्यकत्वेन क्रियामपि वृत्ते' । तेन तद्रूपस्वस्रादित्वेन । समुदायप्रसिद्धिगत्वाय योगव्यवच्छेदाय चाह— शुद्धेति । अत्र न्याये बीजमाह— योगेति । स्वार्थतावच्छेदकानाक्रान्तमात्रविषयकयोगजबोध इत्यर्थः । शुद्धेत्यस्य व्याख्या—तदनेति । योगार्थाभिन्नेत्यर्थं । यद्वा यतस्त-

तद्बीजम् । रथकाराधिकरणन्यायसिद्धोऽयमर्थः । कश्चित्तु— 'दीधीवेवीटाम्' इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्वेङ्वीनामिति ; तन्न, तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ १०८ ॥

ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद्गोक्ष इत्यत्रापि स्यादत आह—

दनालिङ्गितत्वमतः शुद्धत्वमित्यर्थः । तथा च यौगिकरूढस्थलेऽयं प्रतिबन्ध्यप्रतिबन्धक-
भावः, न योगरूढस्थल इति बोध्यम् । ननु प्रतिबन्ध्यप्रतिबन्धकभावकल्पन एव किं
मानमत आह— रथेति । 'माहिष्योग्र्यौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् ।- शूद्रायां
करणो वैश्याद्विमात्स्वेष विधिः स्मृतः । माहिष्येण करण्यां तु रथकारः प्रजायते' इति
मनुः । तदधिकरणे हि योगेन तत्त्वत्रो द्विजो ग्राह्यः, अथ योक्करणो रूढ इति संशय्य,
विद्यादिमत्त्वायोगार्थ एवेति पूर्वपक्षं कृत्वा, रूढेः प्राबल्यात्स एव गृह्यते, तदन्यथानुपप-
त्याऽध्ययनादिकं तस्य कल्प्यत इति सिद्धान्तितम् । अयं प्रतिबन्ध्यप्रतिबन्धकभाव ।
एतेन नायमेतदधिकरणसिद्ध इति भ्रान्तोक्तमपास्तम् । पुरुषोत्तमदेवसीरदेवाद्युक्तिमाह—
कश्चिदिति । 'समुदायस्य सर्वानुग्राहित्वेन प्राधान्यात्प्रधानन्यायलभ्योऽयमर्थः । तेन'
इत्युक्त्वैतत्तैरुक्तम् । इतीति । अस्य 'आह' इति शेषः । अत्र कश्चिदित्यनेनारुचिः
सूचिता सिद्धान्त इङ्ग्रहणसत्त्वेऽपि दीधीवेव्योर्ग्रहणस्य प्रत्याख्यानरूपा । तथा च भाष्य-
रीत्या न तत्फलमिति तात्पर्यम् । सूत्ररीत्यापि तन्नेति मतान्तरमाह— तन्नेति । यत्तु—
धीवेदीधीटामिति वदेदिति न्यासकृदनुवादिसीरदेवादयः ; तन्न ; तावताऽपि दीधीत्यंशे
दोषतादवस्थ्यात् । अत आह— दीवेधीति । 'यतः' इत्यादिः । तथा च निष्प्रयो-
जनेयं परिभाषेति तद्भावः । अन्य इति । न्यासकृदादय इत्यर्थः । अनेनारुचिः सूचि-
ता ; तद्बीजं एवमपीङंशे संदेहतादवस्थ्यमेवेत्युपायान्तराश्रयणावश्यकत्वे तेनैवा
त्रापि निर्वाह इति नैवंप्रकाराश्रयणम् । किं चावतरणोक्तफलमत्त्वेन सफलत्वम् । किं च
तत्र प्रधानन्यायेनानिर्वाह इति । एतेन प्रधानन्यायेनैवेयं गतार्थेति भ्रान्तोक्तमपास्तम् ।
तस्मादुक्तमूलफलितैवेयमिति भावः । इदमपि साहचर्यानाश्रयणेन । यदि तु साह-
चर्येण योनिसंबन्धवाचकस्यैव स्त्रीलिङ्गमात्रस्यैव वा ग्रहणमित्युच्यते, तदैषा निष्फलेति
केचित् । वस्तुतस्तु 'पाण्डुकम्बलादिनि' इत्यत्र रूढस्यैव तस्य ग्रहणं न यौगिकस्यापी-
त्यादिफलार्थमस्या आवश्यकत्वम् । मूलं तूरलक्षणमिति बोध्यम् ॥ १०८ ॥

यौगिकरूढप्रसङ्गेन योगरूढविषयामाह— ननु वातेति । नार्थे गेति । अभि-
धेयवाच्यर्थशब्देन बहुव्रीहिः, शब्दपरेण तेन सामानाधिकरण्यमिति भावः । यद्वा तद्रूपेऽर्थे

## अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥ १३४ ॥

'एओङ्' 'ऐऔच्' इति सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव, न तु मात्रालाघवविचार इति 'ऊकालोऽच्—' 'अपृक्त एकाल्—' इत्यादिसूत्रेषु भाष्ये ध्वनितम् । तत्र हि सूत्रे अल्ग्रहणहल्ग्रहणयोर्विशेषविचारे, सञ्ज्ञाया हल्ग्रहणम्, 'ण्यक्षत्रिय—' इति सूत्रे अणिञोरिति वाच्यमिति त्रीणि पदानि; अल्ग्रहणे तदेकम्, स्वादिलोपे हल्ग्रहणम्, ण्येतिसूत्रे अणिञोरिति न वाच्यम् अपृक्तेति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् । 'अचि श्नु—' इति सूत्रे इण इत्येव सिद्धे य्वोरिति संमृच ग्रहणात्पूर्वेणेण्ग्रहण न; तत्र

गौरवप्रसङ्गादाह— अर्धेति । वैयाकरणा अर्धमात्रालाघवेनापि पुत्रोत्सव मन्यन्ते, किमुताधिकलाघवेनेत्यर्थ । एओङिति । तत्र हि 'एच इग—' इत्यस्य प्रत्याख्यानाय अर्धैकारार्धौकारौ यदि स्याताम्, तर्हि तावेव लाघवादयमुपदिशादित्युक्तम् । ताभ्यामुपदिष्टाभ्या दीर्घप्लुतयोरपि प्रदेशेषु ग्रहण सिध्यति । नन्वेव मात्रिकयोरेव गुणसञ्ज्ञा स्यात्तात्परत्वादिति चेत्, न, तत्र दीर्घयोरेव स्वरूपेण निर्देशादिति कैयट । एवमपि तत्र ह्रस्वपाठेऽर्धमात्रालाघव भवतीति तदाकूतम् । मात्रापदलाघवयोर्व्यवस्थामाह— तत्रेति । तयोर्मध्य इत्यर्थ । एवव्यवच्छेद्यमाह— न त्विति । आदिना 'प्रत्ययस्य लुक्श्लुलुप ' 'ए ओङ्' 'ऐ औच्' इत्यादिसूत्रपरिग्रह । तत्रान्यध्वनितमुपपादयति— तत्र हीति । 'अपृक्त एकाल्—' इति सूत्रे हीत्यर्थ । 'उत्तम् इत्यत्रान्वय' । 'वाच्यमिति त्रीणि' इति पाठ । अवान्तरपदत्वाभिप्रायमिदम् । अल्ग्रहण इति । अस्य 'सञ्ज्ञायाम्' इत्यादि । तदेकम् अल्ग्रहणमेकम् । त्रीण्येवेति । अपृक्तशब्दस्य सञ्ज्ञाशब्दत्वाभावान्तरपदभेद इति भाव । 'ऊकालोऽज्—' इत्यत्र ह्रस्वसञ्ज्ञावचनसामर्थ्याद्दीर्घप्लुतयो पूर्वसञ्ज्ञा न भवतीति समाधान समर्थयितुम्, 'यावदज्ग्रहण तावद्ध्रस्वग्रहणम्' इति सञ्ज्ञाया अभावे ह्रस्वप्रदेशेषु एच इगिति षड्ग्रहणानि, सञ्ज्ञाकरणे पुनरष्टावित्युक्तम् । 'प्रत्ययस्य लुक्—' इति सूत्र 'स एषोऽनन्यार्थ कर्तव्यपरदान्ययोर्विशिष्टनिर्देश कर्तव्य । प्रत्ययग्रहण वा कर्तव्यम्' इत्युक्तम् । 'ए ओङ्' इत्यादौ वर्णैकदेशाना वर्णग्रहणेन ग्रहणपक्षे दीर्घ प्रासङ्गस्यविध्यभावाय 'दीर्घात्' इति तुग्विधायक ज्ञापकमित्युक्तम् । अन्यथा ह्रस्वस्येत्यत्र अच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुङ्नेति ज्ञापकपर्यन्तधावनासङ्गतिरेवेति बोध्यमिति भाव । प्रायिकत्वमुक्तस्य कस्मादाह— अचीति । समृचेति ।

।

विभक्तिनिर्देशे संमूय ग्रहणे च सार्धास्तिस्रो मात्राः, इण इति तिस्रो मात्राः, इति लण्सूत्रे भाष्योक्तेः, तथा 'ओतः श्यनि' इति सूत्रे 'शितीति वक्तव्यम्' तत्रायमप्यर्थः— 'ष्ठिवुक्लमु—' इति सूत्रे शितीति न कर्तव्यं भवति' इति भाष्ये 'न केवलं मात्रालाघवं यावदयमप्यर्थः' इति कैयटोक्तेः—शायंणेति शिवम् ॥ १३४ ॥

इति

श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृतः

परिभाषेन्दुशेखरः समाप्तः ।

---

आदेशेन तौ निवर्त्येत्यर्थः । 'ग्रहणं न' इति पाठः । तदेवोपपादयति— तथेति । 'अचि—' इति सूत्र इत्यर्थः । तयोर्मध्य इति यार्थः । 'ग्रहणे च' इति पाठः । इति तिस्र इति । पदच्छेदाभिप्रायेणेदम् । अत एवोक्तम्— विभक्तिनिर्देश इति । संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् । तथेति । तथा इति भाष्ये इति कैयटोक्तेरित्यन्वयः । अर्थः प्रयोजनम् । यावदिति । पदगौरवलाघवमर्पात्यर्थः । ऌकारसूत्रभाष्यं तु पदलाघवपक्षेणापि सुयोजमिति नात्र तदुक्तम् । एवम् 'शाजनोर्जा' इत्यादिसूत्रभाष्यमप्यत्र गमकं बोध्यमित्यन्यत्र विस्तर इति सर्वमनवद्यमिति शिवम् ॥ १३४ ॥

इति

श्रीमत्रायगुण्डोपाख्यमहादेवसुतवेणीगर्भजवैद्यनाथभट्टकृतपरिभाषेन्दु-

शेखरकाशिका परिपूर्णा ।

---

# ॥ श्रीमुनित्रयमन्दिरस्थाः ॥

॥ अन्या ग्रन्था. ॥

परिभाषेन्दुशेखर गदासहित । रू २—८—०

परिभाषाभास्कर —परिभाषेन्दुशेखरव्याख्यानरूप । रू १—०—०

चन्द्रिका—शब्देन्दुशेखरव्याख्या । रू ०—१२—०

कल्पलता—श्रीमन्नारायणाख्या अर्थविभावान्ता । रू १—०—०

पाणिनितन्त्रवादनक्षत्रमाला—श्रीमदप्पय्यदीक्षितविरचिता । अत्र कौस्तुभ-
भाष्यानन्तर्य— न धातुलोप— तत्रकाण्डिन्य— विप्रतिषेध— इको गुणवृद्धिविषयका विमर्शा
अतिप्रौढा अवश्यज्ञेयाश्च सन्ति— ग्रन्थसङ्ख्या च प्रायेण ३००० रू १—८—०.

व्याकरणखेडपत्रप्रथमभाग — अत्र रत्नाकरहारमण्डनमाधवाभरणादिकम्
इत्तरपदत्व इति वार्तिकार्थविचारानुपसर्जना सूत्रप्रत्याख्यानविचारादिकं चास्ति (ग्रन्थ-
सङ्ख्या प्रायेण २१००)—रू १—०—०.

व्याकरणखेडपत्रद्वितीयभाग — अत्र अयत्र सत्रत्यानिव सूत्रप्रातिपदि
कार्यजन्मनवादाद्यादिक भगागकुञ्जहलन्त्यसूत्रार्थविचारादिकं चास्ति (ग्रन्थसङ्ख्या प्रायेण
२१००) रू १—०—०

शांकरी—लघुशब्देन्दुशेखरव्याख्या । रू ०—१२—०

शांकरी— कारकशेखरव्याख्या रू ०—८—०

व्याकरणग्रन्थरत्नावली—प्रतिमासं प्रचार्यमाणा सचिकयम् । अस्यां सुसमा
व्याकरणग्रन्था प्रकाश्यरन् । यमवद्वय माधमासात् । अत्र गदाचन्द्रिकाबृहच्छब्देन्दुशेखरादिकं
प्रकाश्यते । एकस्या सचिकाया मूल्यम्— रू ०—६—६

कारकशब्दरत्नप्रभा—श्रीराघवेन्द्राचार्यकृता । रू ०—४—०

कारकशाब्दबोधप्रकरणम्—श्रीराघवेन्द्राचार्यकृतम् । रू ०—२—०.

साहित्यरत्नमञ्जूषा—समयापयोगिगद्यपद्यसङ्कलनात्मक प्रबन्ध । अत्र
चत्वारो भागा , प्रथम बहुभ्यो नाटकेभ्यो वाक्यानि, द्वितीय तेभ्य एव पद्यानि तृतीय
गद्यकाव्येभ्यो वाक्यानि चतुर्थ अनेकेभ्यो काव्येभ्य पद्यानि चाहृत्य योजितानि ।
पाण्डिताना विशेषत विद्यार्थिना चातीवोपकारक । एतादृशपुस्तकावश्यकता सर्वेषामपि
सम्मता । रू १—०—०

**स्तोत्राणि—** श्रीमन्निगमान्तमहादेशिकानुगृहीतानि सर्वाणि
सन्ति । रू १—०—०

विक्रमार्कचरितम्— (परिष्कृत्य मुद्रितम्) रू ०—६—०

गद्यत्रयम्— (भगवद्रामानुजविरचितम्) रू १—० —० रघुवंशविमर्श
रू १—०—० वररुचिचरितम् रू ०—४—० तिलकमञ्जरीसङ्ग्रह
प्रथमभाग रू ०—८—० चक्रवर्तिचत्वारिंशत् रू ०—१—०

भर्तृहरिसुभाषितसारसङ्ग्रह —रू ०—१—६

☞ सर्वेषामपि प्रापणव्यय पृथक्

Chej Manager,